।। मङ्गलाचरणम् । ।।

यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।। १.०.१ ।।

सेव्यतामक्षयो धीराः स श्रिये चामृताय च ।। १.०.२ ।।

।। प्रस्तावना ।।

समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।। १.०.३ ।।

संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ।। १.०.४ ।।

।। परिभाषा ।।

प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।। १.०.५ ।।

स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ।। १.०.६ ।।

भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः ।। १.०.७ ।।

कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ।। १.०.८ ।।

त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।। १.०.९ ।।

निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ।। १.०.१० ।।

।। स्वर्गवर्गः ।।

स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।। १.१.११ ।।

सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ।। १.१.१२ ।।

अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।। १.१.१३ ।।

सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ।। १.१.१४ ।।

आदितेया दिविषदो लेखा अदितिनन्दनाः ।। १.१.१५ ।।

आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ।। १.१.१६ ।।

बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।। १.१.१७ ।।

वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ।। १.१.१८ ।।

आदित्यविश्ववसवस्तुषिताभास्वरानिलाः ।। १.१.१९ ।।

महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ।। १.१.२० ।।

विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः ।। १.१.२१ ।।

पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।। १.१.२२ ।।

असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः ।। १.१.२३ ।।

शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ।। १.१.२४ ।।

सर्वज्ञः सुगतः बुद्धो धर्मराजस्तथागतः ।। १.१.२५ ।।

समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ।। १.१.२६ ।।

षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।। १.१.२७ ।।

मुनीन्द्रः श्रीघनः शास्ता मुनिः शाक्यमुनिस्तु यः ।। १.१.२८ ।।

स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।। १.१.२९ ।।

गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ।। १.१.३० ।।

ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।। १.१.३१ ।।

हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः ।। १.१.३२ ।।

धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।। १.१.३३ ।।

स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृग्विधिः ।। १.१.३४ ।।

नाभिजन्माण्डजः पूर्वो निधनः कमलोद्भवः ।। १.१.३५ ।।

सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ।। १.१.३६ ।।

विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।। १.१.३७ ।।

दामोदरो हृषीकेशः केशवो माधवः स्वभूः ।। १.१.३८ ।।

दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।। १.१.३९ ।।

पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ।। १.१.४० ।।

उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।। १.१.४१ ।।

पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ।। १.१.४२ ।।

देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।। १.१.४३ ।।

वनमाली बलिध्वंसी कंसारातिरधोक्षजः ।। १.१.४४ ।।

विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः ।। १.१.४५ ।।

पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ।। १.१.४६ ।।

जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः ।। १.१.४७ ।।

वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ।। १.१.४८ ।।

बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।। १.१.४९ ।।

रेवतीरमणो रामः कामपालो हलायुधः ।। १.१.५० ।।

नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।। १.१.५१ ।।

संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः ।। १.१.५२ ।।

मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।। १.१.५३ ।।

कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ।। १.१.५४ ।।

शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।। १.१.५५ ।।

पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ।। १.१.५६ ।।

अरविन्दमशोकं च चूतं च नवमल्लिका ।। १.१.५७ ।।

नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।। १.१.५८ ।।

उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा ।। १.१.५९ ।।

संमोहनश्च कामश्च पञ्च बाणाः प्रकीर्तिताः ।। १.१.६० ।।

ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः ।। १.१.६१ ।।

लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ।। १.१.६२ ।।

इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।। १.१.६३ ।।

भार्गवी लोकजननी क्षीरसागरकन्यका ।। १.१.६४ ।।

शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः ।। १.१.६५ ।।

कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः ।। १.१.६६ ।।

चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् ।। १.१.६७ ।।

अश्वाश्च शैव्यसुग्रीवमेघपुष्पबलाहकाः ।। १.१.६८ ।।

सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः ।। १.१.६९ ।।

गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।। १.१.७० ।।

नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ।। १.१.७१ ।।

शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।। १.१.७२ ।।

ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ।। १.१.७३ ।।

भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।। १.१.७४ ।।

मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ।। १.१.७५ ।।

उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।। १.१.७६ ।।

वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ।। १.१.७७ ।।

कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।। १.१.७८ ।।

हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ।। १.१.७९ ।।

गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।। १.१.८० ।।

व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ।। १.१.८१ ।।

अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ।। १.१.८२ ।।

कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः ।। १.१.८३ ।।

प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः ।। १.१.८४ ।।

विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।। १.१.८५ ।।

अणिमा महिमा चैव गरिमा लघिमा तथा ।। १.१.८६ ।।

प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ।। १.१.८७ ।।

उमा कात्यायनी गौरी काली हैमवतीश्वरी ।। १.१.८८ ।।

शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।। १.१.८९ ।।

अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ।। १.१.९० ।।

आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।। १.१.९१ ।।

कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ।। १.१.९२ ।।

विनायको विघ्नराजद्वैमातुरगणाधिपाः ।। १.१.९३ ।।

अप्येकदन्तहेरम्बलम्बोदरगजाननाः ।। १.१.९४ ।।

कार्तिकेयो महासेनः शरजन्मा षडाननः ।। १.१.९५ ।।

पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ।। १.१.९६ ।।

बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।। १.१.९७ ।।

षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ।। १.१.९८ ।।

शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः ।। १.१.९९ ।।

इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः ।। १.१.१०० ।।

वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ।। १.१.१०१ ।।

जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।। १.१.१०२ ।।

सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ।। १.१.१०३ ।।

बास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।। १.१.१०४ ।।

जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ।। १.१.१०५ ।।

संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।। १.१.१०६ ।।

आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ।। १.१.१०७ ।।

पुलोमजा शचीन्द्राणी नगरी त्वमरावती ।। १.१.१०८ ।।

हय उच्चैःश्रवा सूतो मातलिर्नन्दनं वनम् ।। १.१.१०९ ।।

स्यात्प्रासादो वैजयन्तो जयन्तः पाकशासनिः ।। १.१.११० ।।

ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ।। १.१.१११ ।।

ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।। १.१.११२ ।।

शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।। १.१.११३ ।।

व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ।। १.१.११४ ।।

स्यात्सुधर्मा देवसभा पीयूषममृतं सुधा ।। १.१.११५ ।।

मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।। १.१.११६ ।।

मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ।। १.१.११७ ।।

पञ्चैते देवतरवो मन्दारः पारिजातकः ।। १.१.११८ ।।

सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।। १.१.११९ ।।

सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ ।। १.१.१२० ।।

नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ।। १.१.१२१ ।।

स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।। १.१.१२२ ।।

हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ।। १.१.१२३ ।।

अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।। १.१.१२४ ।।

कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ।। १.१.१२५ ।।

बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुधः ।। १.१.१२६ ।।

आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ।। १.१.१२७ ।।

रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।। १.१.१२८ ।।

हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ।। १.१.१२९ ।।

सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।। १.१.१३० ।।

शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः ।। १.१.१३१ ।।

वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखाः स्त्रियाम् ।। १.१.१३२ ।।

त्रिषु स्फुलिङ्गोऽग्निकणः संतापः संज्वरः समौ ।। १.१.१३३ ।।

उल्का स्यात्निर्गतज्वाला भूतिर्भसितभस्मनी ।। १.१.१३४ ।।

क्षारो रक्षा च दावस्तु दवो वनहुताशनः ।। १.१.१३५ ।।

धर्मराजः पितृपतिः समवर्ती परेतराट् ।। १.१.१३६ ।।

कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ।। १.१.१३७ ।।

कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।। १.१.१३८ ।।

राक्षसः कोणपः क्रव्यात्क्रव्यादोऽस्रप आशरः ।। १.१.१३९ ।।

रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ।। १.१.१४० ।।

यातुधानः पुण्यजनो नैरृतो यातुरक्षसी ।। १.१.१४१ ।।

प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ।। १.१.१४२ ।।

श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ।। १.१.१४३ ।।

पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।। १.१.१४४ ।।

समीरमारुतमरुत्जगत्प्राणसमीरणाः ।। १.१.१४५ ।।

नभस्वद्वातपवनपवमानप्रभञ्जनाः ।। १.१.१४६ ।।

प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः ।। १.१.१४७ ।।

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।। १.१.१४८ ।।

शरीरस्था इमे रंहस्तरसी तु रयः स्यदः ।। १.१.१४९ ।।

जवोऽथ शीघ्रं त्वरितम् लघु क्षिप्रमरं द्रुतम् ।। १.१.१५० ।।

सत्वरं चपलं तूर्णमविलम्बितमाशु च ।। १.१.१५१ ।।

सततेऽनारताश्रान्तसंतताविरतानिशम् ।। १.१.१५२ ।।

नित्यानवरताजस्रमप्यथातिशयो भरः ।। १.१.१५३ ।।

अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।। १.१.१५४ ।।

तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ।। १.१.१५५ ।।

क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत् ।। १.१.१५६ ।।

कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः ।। १.१.१५७ ।।

मनुष्यधर्मा धनदो राजराजो धनाधिपः ।। १.१.१५८ ।।

किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।। १.१.१५९ ।।

यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ।। १.१.१६० ।।

अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ।। १.१.१६१ ।।

कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ।। १.१.१६२ ।।

स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः ।। १.१.१६३ ।।

निधिर्नाशेवधिर्भेदाः पद्मशङ्खादयो निधेः ।। १.१.१६४ ।।

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।। १.१.१६५ ।।

मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ।। १.१.१६६ ।।

।। व्योमवर्गः ।।

द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरं ।। १.२.१६७ ।।

नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ।। १.२.१६८ ।।

वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।। १.२.१६९ ।।

विहासयोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् ।। १.२.१७० ।।

तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम् ।। १.२.१७१ ।।

विहायाः शकुने पुंसि गगने पुंनपुंसकं ।। १.२.१७२ ।।

।। दिग्वर्गः ।।

दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।। १.३.१७३ ।।

प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ।। १.३.१७४ ।।

उत्तरादिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे ।। १.३.१७५ ।।

अवाग्भवमवाचीनमुदीचीचीनमुदग्भवम् ।। १.३.१७६ ।।

प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ।। १.३.१७७ ।।

इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत् ।। १.३.१७८ ।।

कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।। १.३.१७९ ।।

रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।। १.३.१८० ।।

बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः ।। १.३.१८१ ।।

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।। १.३.१८२ ।।

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।। १.३.१८३ ।।

करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ।। १.३.१८४ ।।

ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।। १.३.१८५ ।।

क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक्स्त्रियाम् ।। १.३.१८६ ।।

अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् ।। १.३.१८७ ।।

अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ।। १.३.१८८ ।।

धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ।। १.३.१८९ ।।

घनजीमूतमुदिरजलमुग्धूमयोनयः ।। १.३.१९० ।।

कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् ।। १.३.१९१ ।।

स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ।। १.३.१९२ ।।

शम्पा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ।। १.३.१९३ ।।

तडित्सौदामिनी विद्युच्चञ्चला चपला अपि ।। १.३.१९४ ।।

स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः ।। १.३.१९५ ।।

इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् ।। १.३.१९६ ।।

वृष्टिवर्षं तद्विघातेऽवग्राहावग्रहौ समौ ।। १.३.१९७ ।।

धारासम्पात आसारः शीकरोम्बुकणाः स्मृताः ।। १.३.१९८ ।।

वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ।। १.३.१९९ ।।

अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ।। १.३.२०० ।।

अपिधानतिरोधानपिधानाच्छादनानि च ।। १.३.२०१ ।।

हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ।। १.३.२०२ ।।

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।। १.३.२०३ ।।

अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ।। १.३.२०४ ।।

द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।। १.३.२०५ ।।

कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु ।। १.३.२०६ ।।

भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंशके ।। १.३.२०७ ।।

चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ।। १.३.२०८ ।।

कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ।। १.३.२०९ ।।

सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्च्छविः ।। १.३.२१० ।।

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।। १.३.२११ ।।

प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ।। १.३.२१२ ।।

शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ।। १.३.२१३ ।।

तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ।। १.३.२१४ ।।

ध्रुव औत्तानपादिः स्यातगस्त्यः कुम्भसम्भवः ।। १.३.२१५ ।।

मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ।। १.३.२१६ ।।

नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।। १.३.२१७ ।।

दाक्षायिण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ।। १.३.२१८ ।।

राधाविशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ।। १.३.२१९ ।।

समा धनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ।। १.३.२२० ।।

मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।। १.३.२२१ ।।

इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः ।। १.३.२२२ ।।

बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ।। १.३.२२३ ।।

जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ।। १.३.२२४ ।।

शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।। १.३.२२५ ।।

अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ।। १.३.२२६ ।।

रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्वरौ ।। १.३.२२७ ।।

तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ।। १.३.२२८ ।।

सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।। १.३.२२९ ।।

राशीनामुदयो लग्नं ते तु मेषवृषादयः ।। १.३.२३० ।।

सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।। १.३.२३१ ।।

भास्कराहस्करब्रध्नप्रभाकरविभाकराः ।। १.३.२३२ ।।

भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।। १.३.२३३ ।।

विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ।। १.३.२३४ ।।

द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।। १.३.२३५ ।।

विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ।। १.३.२३६ ।।

भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।। १.३.२३७ ।।

पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ।। १.३.२३८ ।।

कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ।। १.३.२३९ ।।

प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ।। १.३.२४० ।।

इनो भगो भामनिधिश्चांऽशुमाल्यञ्जिनीपतिः ।। १.३.२४१ ।।

माठरः पिङ्गलो दण्डश्चण्डांशोः परिपार्श्वकाः ।। १.३.२४२ ।।

सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।। १.३.२४३ ।।

परिवेषस्तुपरिधिरुपसूर्यकमण्डले ।। १.३.२४४ ।।

किरणोस्रमयूखांऽशुगभस्तिघृणिरश्मयः ।। १.३.२४५ ।।

भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ।। १.३.२४६ ।।

स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।। १.३.२४७ ।।

रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ।। १.३.२४८ ।।

कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।। १.३.२४९ ।।

तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ।। १.३.२५० ।।

।। कालवर्गः ।।

कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः ।। १.४.२५१ ।।

प्रतिपद्द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ।। १.४.२५२ ।।

घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।। १.४.२५३ ।।

प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ।। १.४.२५४ ।।

व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते ।। १.४.२५५ ।।

प्रभातं च दिनान्ते तु सायं सन्ध्या पितृप्रसूः ।। १.४.२५६ ।।

प्राह्णापराह्णमध्याह्नस्त्रिसन्ध्यमथ शर्वरी ।। १.४.२५७ ।।

निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।। १.४.२५८ ।।

विभावरी तमस्विन्यौ रजनी यामिनी तमी ।। १.४.२५९ ।।

तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता ।। १.४.२६० ।।

आगामिवर्तमानार्हयुक्तायां निशि पक्षिणी ।। १.४.२६१ ।।

गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् ।। १.४.२६२ ।।

अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ।। १.४.२६३ ।।

स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ।। १.४.२६४ ।।

पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पौर्णिमा ।। १.४.२६५ ।।

कलाहीने सानुमतिः पूर्णे राका निशाकरे ।। १.४.२६६ ।।

अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ।। १.४.२६७ ।।

सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः ।। १.४.२६८ ।।

उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ।। १.४.२६९ ।।

सोपप्लवोपरक्तौ द्वौ अग्न्युत्पात उपाहितः ।। १.४.२७० ।।

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।। १.४.२७१ ।।

अष्टादश निमेषास्तु काष्टा त्रिंशत्तु ताः कला ।। १.४.२७२ ।।

तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ।। १.४.२७३ ।।

ते तु त्रिंशदहोरात्रः पक्षस्ते दशपञ्च च ।। १.४.२७४ ।।

पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ।। १.४.२७५ ।।

द्वौ द्वौ मार्गादि मासौ स्यादृतुस्तैरयनं त्रिभिः ।। १.४.२७६ ।।

अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ।। १.४.२७७ ।।

समरात्रिदिवे काले विषुवद्विषुवं च तत् ।। १.४.२७८ ।।

पुष्पयुक्ता पौर्णमासी पौषी मासे तु यत्र सा ।। १.४.२७९ ।।

नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ।। १.४.२८० ।।

मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ।। १.४.२८१ ।।

पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने ।। १.४.२८२ ।।

स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः ।। १.४.२८३ ।।

वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् ।। १.४.२८४ ।।

आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ।। १.४.२८५ ।।

स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।। १.४.२८६ ।।

स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तुकार्तिके ।। १.४.२८७ ।।

बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोऽस्त्रियाम् ।। १.४.२८८ ।।

वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः ।। १.४.२८९ ।।

निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।। १.४.२९० ।।

स्त्रियां प्रावृट्स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम् ।। १.४.२९१ ।।

षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।। १.४.२९२ ।।

संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ।। १.४.२९३ ।।

मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ।। १.४.२९४ ।।

दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ।। १.४.२९५ ।।

मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ।। १.४.२९६ ।।

संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ।। १.४.२९७ ।।

अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् ।। १.४.२९८ ।।

कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ।। १.४.२९९ ।।

स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ।। १.४.३०० ।।

मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ।। १.४.३०१ ।।

स्यादानन्दथुरानन्दः शर्मशातसुखानि च ।। १.४.३०२ ।।

श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ।। १.४.३०३ ।।

भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।। १.४.३०४ ।।

शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ।। १.४.३०५ ।।

मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।। १.४.३०६ ।।

प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ।। १.४.३०७ ।।

दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।। १.४.३०८ ।।

हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ।। १.४.३०९ ।।

क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् ।। १.४.३१० ।।

विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः ।। १.४.३११ ।।

जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।। १.४.३१२ ।।

प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ।। १.४.३१३ ।।

जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता ।। १.४.३१४ ।।

चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ।। १.४.३१५ ।।

।। धीवर्गः ।।

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।। १.५.३१६ ।।

प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ।। १.५.३१७ ।।

धीर्धारणावती मेधा संकल्पः कर्म मानसम् ।। १.५.३१८ ।।

अवधानं समाधानं प्रणिधानं तथैव च ।। १.५.३१९ ।।

चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा ।। १.५.३२० ।।

विमर्शो भावना चैव वासना च निगद्यते ।। १.५.३२१ ।।

अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ।। १.५.३२२ ।।

सन्देहद्वापरौ चाथ समौ निर्णयनिश्चयौ ।। १.५.३२३ ।।

मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम् ।। १.५.३२४ ।।

समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः ।। १.५.३२५ ।।

संविदागूः प्रतिज्ञानम् नियमाश्रवसंश्रवाः ।। १.५.३२६ ।।

अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ।। १.५.३२७ ।।

मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।। १.५.३२८ ।।

मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ।। १.५.३२९ ।।

मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् ।। १.५.३३० ।।

रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ।। १.५.३३१ ।।

गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् ।। १.५.३३२ ।।

कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम् ।। १.५.३३३ ।।

तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः ।। १.५.३३४ ।।

तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ।। १.५.३३५ ।।

विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।। १.५.३३६ ।।

आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात् ।। १.५.३३७ ।।

समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः ।। १.५.३३८ ।।

इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ।। १.५.३३९ ।।

पूतिगन्धस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत् ।। १.५.३४० ।।

शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ।। १.५.३४१ ।।

अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः ।। १.५.३४२ ।।

हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ।। १.५.३४३ ।।

कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।। १.५.३४४ ।।

पीतो गौरो हरिद्राभः पलाशो हरितो हरित् ।। १.५.३४५ ।।

लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ।। १.५.३४६ ।।

अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ।। १.५.३४७ ।।

श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ।। १.५.३४८ ।।

कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ।। १.५.३४९ ।।

चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।। १.५.३५० ।।

गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ।। १.५.३५१ ।।

।। वाग्वर्गः ।।

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।। १.६.३५२ ।।

व्यवहार उक्तिर्लपितं भाषितं वचनं वचः ।। १.६.३५३ ।।

अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः ।। १.६.३५४ ।।

तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ।। १.६.३५५ ।।

श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ।। १.६.३५६ ।।

स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ।। १.६.३५७ ।।

शिक्षेत्यादि श्रुतेरङ्गमोङ्कारप्रणवौ समौ ।। १.६.३५८ ।।

इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ।। १.६.३५९ ।।

आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।। १.६.३६० ।।

आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ।। १.६.३६१ ।।

प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका ।। १.६.३६२ ।।

स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ।। १.६.३६३ ।।

समस्या तु समासार्था किंवदन्ती जनश्रुतिः ।। १.६.३६४ ।।

वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ।। १.६.३६५ ।।

आख्याह्वे अभिधानं च नामधेयं च नाम च ।। १.६.३६६ ।।

हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ।। १.६.३६७ ।।

विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम् ।। १.६.३६८ ।।

उपोद्धात उदाहारः शपनं शपथः पुमान् ।। १.६.३६९ ।।

प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे ।। १.६.३७० ।।

मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम् ।। १.६.३७१ ।।

अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः ।। १.६.३७२ ।।

यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः ।। १.६.३७३ ।।

आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा ।। १.६.३७४ ।।

काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ।। १.६.३७५ ।।

अवर्णाक्षेपनिर्वादपरीवादापवादवत्. ।। १.६.३७६ ।।

उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ।। १.६.३७७ ।।

पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ।। १.६.३७८ ।।

यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।। १.६.३७९ ।।

तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।। १.६.३८० ।।

स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ।। १.६.३८१ ।।

अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।। १.६.३८२ ।।

विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ।। १.६.३८३ ।।

सुप्रलापः सुवचनमपलापस्तु निह्नवः ।। १.६.३८४ ।।

चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा ।। १.६.३८५ ।।

अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम् ।। १.६.३८६ ।।

सन्देशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ।। १.६.३८७ ।।

रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका ।। १.६.३८८ ।।

अत्यर्थमधुरं सान्त्वं संगतं हृदयङ्गमम् ।। १.६.३८९ ।।

निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये ।। १.६.३९० ।।

सत्येऽथ संकुलक्लिष्टे परस्परपराहते ।। १.६.३९१ ।।

लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् ।। १.६.३९२ ।।

जम्बूकृतं सनिष्टीवमबद्धं स्यादनर्थकम् ।। १.६.३९३ ।।

अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् ।। १.६.३९४ ।।

सोल्लुठनं तु सोत्प्रासं मणितं रतिकूजितम् ।। १.६.३९५ ।।

श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम् ।। १.६.३९६ ।।

अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ।। १.६.३९७ ।।

सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ।। १.६.३९८ ।।

।। शब्दवर्गः ।।

शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ।। १.७.३९९ ।।

स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ।। १.७.४०० ।।

आरवारावसंरावविरावा अथ मर्मरः ।। १.७.४०१ ।।

स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् ।। १.७.४०२ ।।

निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ।। १.७.४०३ ।।

वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ।। १.७.४०४ ।।

कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् ।। १.७.४०५ ।।

स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ।। १.७.४०६ ।।

।। नाट्यवर्गः ।।

निषादर्षभगान्धारषड्जमध्यमधैवताः ।। १.८.४०७ ।।

पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ।। १.८.४०८ ।।

काकली तु कले सूक्ष्मे ध्वनी तु मधुरास्फुटे ।। १.८.४०९ ।।

कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ।। १.८.४१० ।।

नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ।। १.८.४११ ।।

स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते ।। १.८.४१२ ।।

समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ।। १.८.४१३ ।।

त्रिपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ।। १.८.४१४ ।।

ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।। १.८.४१५ ।।

वंशादिकं तु सुषिरं कांस्यतालादिकं घनं ।। १.८.४१६ ।।

चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।। १.८.४१७ ।।

मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ।। १.८.४१८ ।।

स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान् ।। १.८.४१९ ।।

आनकः पटहोऽस्त्री स्यात्कोणो वीणादि वादनम् ।। १.८.४२० ।।

वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः ।। १.८.४२१ ।।

कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम् ।। १.८.४२२ ।।

वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ।। १.८.४२३ ।।

मर्दलः पणवोऽन्ये च नर्तकीलासिके समे ।। १.८.४२४ ।।

विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।। १.८.४२५ ।।

तालः कालक्रियामानं लयः साम्यममथास्त्रियाम् ।। १.८.४२६ ।।

ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ।। १.८.४२७ ।।

तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ।। १.८.४२८ ।।

भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ।। १.८.४२९ ।।

स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाञ्जुका ।। १.८.४३० ।।

भगिनीपतिरावुत्तो भावो विद्वानथावुकः ।। १.८.४३१ ।।

जनको युवराजस्तु कुमारो भर्तृदारकः ।। १.८.४३२ ।।

राजा भट्टारको देवस्तत्सुता भर्तृदारिका ।। १.८.४३३ ।।

देवी कृताभिषेकायामितरासु तु भट्टिनी ।। १.८.४३४ ।।

अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः ।। १.८.४३५ ।।

अम्बा माताथ बाला स्याद्वासूरार्यस्तु मारिषः ।। १.८.४३६ ।।

अत्तिका भगिनी ज्येष्ठा निष्ठा निर्वहणे समे ।। १.८.४३७ ।।

हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।। १.८.४३८ ।।

अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ ।। १.८.४३९ ।।

निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ।। १.८.४४० ।।

शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।। १.८.४४१ ।।

बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः ।। १.८.४४२ ।।

उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा ।। १.८.४४३ ।।

कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः ।। १.८.४४४ ।।

हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् ।। १.८.४४५ ।।

विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ।। १.८.४४६ ।।

दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।। १.८.४४७ ।।

भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु ।। १.८.४४८ ।।

चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।। १.८.४४९ ।।

विकारो मानसो भावोऽनुभावो भावबोधकः ।। १.८.४५० ।।

गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः ।। १.८.४५१ ।।

दर्पोऽवलोकोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ।। १.८.४५२ ।।

अनादरः परिभवः परीभावस्तिरस्क्रिया ।। १.८.४५३ ।।

रीढावमाननावज्ञावहेलनमसूर्क्षणम् ।। १.८.४५४ ।।

मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः ।। १.८.४५५ ।।

क्षान्तिस्तितिक्षाभिध्या तु परस्य विषये स्पृहा ।। १.८.४५६ ।।

अक्षान्तिरीर्ष्यासूया तु दोषारोपो गुणेष्वपि ।। १.८.४५७ ।।

वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक्स्त्रियाम् ।। १.८.४५८ ।।

पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ।। १.८.४५९ ।।

कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।। १.८.४६० ।।

शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः ।। १.८.४६१ ।।

प्रेमा ना प्रियता हार्दं प्रेमस्नेहोऽथ दोहदम् ।। १.८.४६२ ।।

इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ।। १.८.४६३ ।।

कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः ।। १.८.४६४ ।।

उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा ॥ १.८.४६५ ॥

स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ॥ १.८.४६६ ॥

उत्साहोऽध्यवसायः स्यात्स वीर्यमतिशक्तिभाक् ॥ १.८.४६७ ॥

कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ॥ १.८.४६८ ॥

कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥ १.८.४६९ ॥

कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ॥ १.८.४७० ॥

स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा ॥ १.८.४७१ ॥

हेला लीलेत्यमी हावाःक्रियाः शृङ्गारभावजाः ॥ १.८.४७२ ॥

द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ १.८.४७३ ॥

व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ॥ १.८.४७४ ॥

घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥ १.८.४७५ ॥

अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ॥ १.८.४७६ ॥

स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम् ॥ १.८.४७७ ॥

मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम् ॥ १.८.४७८ ॥

क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम् ॥ १.८.४७९ ॥

विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे ॥ १.८.४८० ॥

स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ १.८.४८१ ॥

तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ॥ १.८.४८२ ॥

अदृष्टिः स्यादसौम्येऽक्षिण संसिद्धिप्रकृती त्विमे ॥ १.८.४८३ ॥

स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः ॥ १.८.४८४ ॥

कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ १.८.४८५ ॥

॥ पातालभोगिवर्गः} ॥

अधोभुवनपातालं बलिसद्म रसातलं ॥ १.९.४८६ ॥

नागलोकोऽथ कुहरं सुषिरं विवरं बिलम् ॥ १.९.४८७ ॥

छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः ॥ १.९.४८८ ॥

गर्तावटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु ।। १.९.४८९ ।।

अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।। १.९.४९० ।।

ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः ।। १.९.४९१ ।।

विष्वक्संतमसं नागाः काद्रवेयास्तदीश्वरे ।। १.९.४९२ ।।

शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे ।। १.९.४९३ ।।

तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ।। १.९.४९४ ।।

अलगर्दो जलव्यालः समौ राजिलडुण्डुमौ ।। १.९.४९५ ।।

मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः ।। १.९.४९६ ।।

सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ।। १.९.४९७ ।।

आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।। १.९.४९८ ।।

कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ।। १.९.४९९ ।।

दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।। १.९.५०० ।।

उरगः पन्नगो भोगी जिह्मगः पवनाशनः ।। १.९.५०१ ।।

लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।। १.९.५०२ ।।

कुम्भीनसः फणधरो हरिर्भोगधरस्तथा ।। १.९.५०३ ।।

अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका ।। १.९.५०४ ।।

त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः ।। १.९.५०५ ।।

समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ।। १.९.५०६ ।।

पुंसि क्लीबे च काकोलकालकूटहलाहलाः ।। १.९.५०७ ।।

सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ।। १.९.५०८ ।।

दारदो वत्सनाभश्च विषभेदा अमी नव ।। १.९.५०९ ।।

विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः ।। १.९.५१० ।।

।। नरकवर्गः} ।।

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियां ।। १.१०.५११ ।।

तद्भेदास्तपनावीचिमहारौरवरौरवाः ।। १.१०.५१२ ।।

संघातः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः ।। १.१०.५१३ ।।

प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्‌ऋतिः ।। १.१०.५१४ ।।

विष्टिराजूः कारणा तु यातना तीव्रवेदना ।। १.१०.५१५ ।।

पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ।। १.१०.५१६ ।।

स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ।। १.१०.५१७ ।।

।। वारिवर्गः} ।।

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।। १.११.५१८ ।।

उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ।। १.११.५१९ ।।

रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः ।। १.११.५२० ।।

तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ।। १.११.५२१ ।।

आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलं ।। १.११.५२२ ।।

पयः कीलालममृतं जीवनं भुवनं वनम् ।। १.११.५२३ ।।

कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।। १.११.५२४ ।।

अम्भोर्णस्तोयपानीयनीरक्षीरोऽम्बुशम्बरम् ।। १.११.५२५ ।।

मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ।। १.११.५२६ ।।

भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ।। १.११.५२७ ।।

महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः ।। १.११.५२८ ।।

पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ।। १.११.५२९ ।।

चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।। १.११.५३० ।।

कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ।। १.११.५३१ ।।

पारावारे परार्वाची तीरे पात्रं तदन्तरम् ।। १.११.५३२ ।।

द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ।। १.११.५३३ ।।

तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ।। १.११.५३४ ।।

निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ।। १.११.५३५ ।।

जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ।। १.११.५३६ ।।

नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः ।। १.११.५३७ ।।

उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः ।। १.११.५३८ ।।

आतरस्तरपण्यं स्याद्द्रोणी काष्टाम्बुवाहिनी ।। १.११.५३९ ।।

सांयात्रिकः पोतवणिक्कर्णधारस्तु नाविकः ।। १.११.५४० ।।

नियामकाः पोतवाहाः कूपको गुणवृक्षकः ।। १.११.५४१ ।।

नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः ।। १.११.५४२ ।।

अभ्रिः स्त्री काष्टकुद्दालः सेकपात्रं तु सेचनम् ।। १.११.५४३ ।।

क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु ।। १.११.५४४ ।।

त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः ।। १.११.५४५ ।।

निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये ।। १.११.५४६ ।।

अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ।। १.११.५४७ ।।

आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम् ।। १.११.५४८ ।।

मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनम् ।। १.११.५४९ ।।

पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।। १.११.५५० ।।

विसारः शकुली चाथ गडकः शकुलार्भकः ।। १.११.५५१ ।।

सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ।। १.११.५५२ ।।

नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ।। १.११.५५३ ।।

क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ।। १.११.५५४ ।।

रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ।। १.११.५५५ ।।

तिमिङ्गलादयश्चाथ यादांसि जलजन्तवः ।। १.११.५५६ ।।

तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ।। १.११.५५७ ।।

स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ।। १.११.५५८ ।।

ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता ।। १.११.५५९ ।।

गण्डूपदः किञ्चुलको निहाका गोधिका समे ।। १.११.५६० ।।

रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ।। १.११.५६१ ।।

मुक्तास्फोटः स्त्रियां शुक्तिः शङ्खः स्यात्कम्बुरस्त्रियौ ।। १.११.५६२ ।।

क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः ।। १.११.५६३ ।।

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।। १.११.५६४ ।।

शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः ।। १.११.५६५ ।।

मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ।। १.११.५६६ ।।

जलाशया जलाधारास्तत्रागाधजलो ह्रदः ।। १.११.५६७ ।।

आहावस्तु निपानं स्यादुपकूपजलाशये ।। १.११.५६८ ।।

पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ।। १.११.५६९ ।।

नेमिस्त्रिकास्य वीनाहो मुखबन्धनमस्य यत् ।। १.११.५७० ।।

पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ।। १.११.५७१ ।।

पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ।। १.११.५७२ ।।

वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ।। १.११.५७३ ।।

खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम् ।। १.११.५७४ ।।

स्यादालवालमावालमावापोऽथ नदी सरित् ।। १.११.५७५ ।।

तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।। १.११.५७६ ।।

स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगापगा ।। १.११.५७७ ।।

कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती ।। १.११.५७८ ।।

गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।। १.११.५७९ ।।

भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ।। १.११.५८० ।।

कालिन्दी सूर्यतनया यमुना शमनस्वसा ।। १.११.५८१ ।।

रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ।। १.११.५८२ ।।

करतोया सदानीरा बाहुदा सैतवाहिनी ।। १.११.५८३ ।।

शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट्स्त्रियाम् ।। १.११.५८४ ।।

शोणो हिरण्यवाहः स्यात्कुल्याल्पा कृत्रिमा सरित् ।। १.११.५८५ ।।

शरावती वेत्रवती चन्द्रभागा सरस्वती ।। १.११.५८६ ।।

कावेरी सरितोऽन्याश्च सम्भेदः सिन्धुसङ्गमः ।। १.११.५८७ ।।

द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ।। १.११.५८८ ।।

देविकायां सरय्वां च भवे दाविकसारवौ ।। १.११.५८९ ।।

सौगन्धिकं तु कल्हारं हल्लकं रक्तसन्ध्यकम् ।। १.११.५९० ।।

स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ।। १.११.५९१ ।।

इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ।। १.११.५९२ ।।

शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका ।। १.११.५९३ ।।

जलनीली तु शैवालं शैवलोऽथ कुमुद्वती ।। १.११.५९४ ।।

कुमुदिन्यां नलिन्यां तु विसिनीपद्मिनीमुखाः ।। १.११.५९५ ।।

वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।। १.११.५९६ ।।

सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।। १.११.५९७ ।।

पङ्केरुहं तामरसं सारसं सरसीरुहम् ।। १.११.५९८ ।।

बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।। १.११.५९९ ।।

पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ।। १.११.६०० ।।

रक्तोत्पलं कोकनदं नालो नालमथास्त्रियाम् ।। १.११.६०१ ।।

मृणालं बिसमब्जादिकदम्बे खण्डमस्त्रियाम् ।। १.११.६०२ ।।

करहाटः शिफाकन्दः किञ्जल्कः केसरोऽस्त्रियाम् ।। १.११.६०३ ।।

संवर्तिका नवदलं बीजकोशो वराटकः ।। १.११.६०४ ।।

।। काण्डसमाप्तिः ।।

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ।। १.१२.६०५ ।।

पातालभोगिनरकं वारि चैषां च सङ्गतम् ।। १.१२.६०६ ।।

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।। १.१२.६०७ ।।

स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ।। १.१२.६०८ ।।

।। वर्गभेदाः । ।।

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।। २.०.१ ।।

नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ।। २.०.२ ।।

।। भूमिवर्गः ।।

भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिता ।। २.१.३ ।।

धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ।। २.१.४ ।।

सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।। २.१.५ ।।

गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ।। २.१.६ ।।

विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।। २.१.७ ।।

भूतधात्री रत्नगर्भा जगती सागराम्बरा ।। २.१.८ ।।

मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।। २.१.९ ।।

उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका ।। २.१.१० ।।

ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ।। २.१.११ ।।

समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ।। २.१.१२ ।।

त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ।। २.१.१३ ।।

लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः ।। २.१.१४ ।।

देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः ।। २.१.१५ ।।

प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यद्देशस्तु मध्यमः ।। २.१.१६ ।।

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ।। २.१.१७ ।।

नीवृज्जनपदो देशविषयौ तूऽपवर्तनम् ।। २.१.१८ ।।

त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि ।। २.१.१९ ।।

कुमुद्वान्कुमुदप्राये वेतस्वान्बहुवेतसे ।। २.१.२० ।।

शाद्वलः शादहरिते सजम्बाले तु पङ्किलः ।। २.१.२१ ।।

जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ।। २.१.२२ ।।

स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।। २.१.२३ ।।

देश एवादिमावेववमुन्नेयाः सिकतावति ।। २.१.२४ ।।

देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ।। २.१.२५ ।।

स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ।। २.१.२६ ।।

सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् ।। २.१.२७ ।।

गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ।। २.१.२८ ।।

पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् ।। २.१.२९ ।।

वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् ।। २.१.३० ।।

अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।। २.१.३१ ।।

सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ।। २.१.३२ ।।

अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ।। २.१.३३ ।।

व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ।। २.१.३४ ।।

अपन्थास्त्वपथं तुल्ये शृण्गाटकचतुष्पथे ।। २.१.३५ ।।

प्रान्तरं दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम् ।। २.१.३६ ।।

गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् ।। २.१.३७ ।।

घण्टापथः संसरणं तत्पुरस्योपनिष्करम् ।। २.१.३८ ।।

द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ।। २.१.३९ ।।

दिवस्पृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः ।। २.१.४० ।।

।। पुरवर्गः ।।।

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।। २.२.४१ ।।

स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ।। २.२.४२ ।।

तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ।। २.२.४३ ।।

आपणस्तु निषद्यायां विपणिः पण्यवीथिका ।। २.२.४४ ।।

रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ।। २.२.४५ ।।

प्राकारो वरणः सालः प्राचीनं प्रातन्तो वृतिः ।। २.२.४६ ।।

भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।। २.२.४७ ।।

गृहं गेहदवसितं वेश्म सद्म निकेतनम् ।। २.२.४८ ।।

निशान्तं पस्त्यसदनं भवनागारमन्दिरम् ।। २.२.४९ ।।

गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ।। २.२.५० ।।

वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ।। २.२.५१ ।।

चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ।। २.२.५२ ।।

चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा ।। २.२.५३ ।।

आवेशनं शिल्पिशाला प्रपा पानीयशालिका ।। २.२.५४ ।।

मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् ।। २.२.५५ ।।

गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ।। २.२.५६ ।।

कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम् ।। २.२.५७ ।।

वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः ।। २.२.५८ ।।

हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ।। २.२.५९ ।।

सौधोऽस्त्री राजसदनमुपकार्योपकारिका ।। २.२.६० ।।

स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ।। २.२.६१ ।।

विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ।। २.२.६२ ।।

स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ।। २.२.६३ ।।

शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् ।। २.२.६४ ।।

प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ।। २.२.६५ ।।

गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे ।। २.२.६६ ।।

अधस्ताद्दारुणि शिला नासा दारुपरि स्थितम् ।। २.२.६७ ।।

प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकम् ।। २.२.६८ ।।

वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ।। २.२.६९ ।।

गोपानसी तु वलभी छादने वक्रदारुणि ।। २.२.७० ।।

कपोतपालिकायां तु विटङ्कं पुंनपुंसकम् ।। २.२.७१ ।।

स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ।। २.२.७२ ।।

तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ।। २.२.७३ ।।

कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ।। २.२.७४ ।।

कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ।। २.२.७५ ।।

आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी ।। २.२.७६ ।।

संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा ।। २.२.७७ ।।

क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम् ।। २.२.७८ ।।

समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ।। २.२.७९ ।।

ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे ।। २.२.८० ।।

घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ।। २.२.८१ ।।

।। शैलवर्गः । ।।

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।। २.३.८२ ।।

अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ।। २.३.८३ ।।

लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ।। २.३.८४ ।।

अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ।। २.३.८५ ।।

हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रिकः ।। २.३.८६ ।।

गन्धमादनमन्ये च हेमकूटादयो नगाः ।। २.३.८७ ।।

पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।। २.३.८८ ।।

कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ।। २.३.८९ ।।

कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् ।। २.३.९० ।।

उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ।। २.३.९१ ।।

दरी तु कन्दरो वा स्त्री देवखातबिले गुहा ।। २.३.९२ ।।

गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ।। २.३.९३ ।।

दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ।। २.३.९४ ।।

खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः ।। २.३.९५ ।।

उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ।। २.३.९६ ।।

धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ।। २.३.९७ ।।

निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।। २.३.९८ ।।

।। वनौषधिवर्गः । ।।

अटव्यरण्यं विपिनं गहनं काननं वनम् ।। २.४.९९ ।।

महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ।। २.४.१०० ।।

आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।। २.४.१०१ ।।

अमात्यगणिकागेहोपवने वृक्षवाटिका ।। २.४.१०२ ।।

पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ।। २.४.१०३ ।।

स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ।। २.४.१०४ ।।

वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।। २.४.१०५ ।।

वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ।। २.४.१०६ ।।

वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।। २.४.१०७ ।।

अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ।। २.४.१०८ ।।

वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ।। २.४.१०९ ।।

ओषध्यः फलपाकान्ताः स्युरवन्ध्यहफलेग्रहिः ।। २.४.११० ।।

वन्ध्योऽफलोऽवकेशी च फलवान्फलिनः फली ।। २.४.१११ ।।

प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ।। २.४.११२ ।।

फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ।। २.४.११३ ।।

स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ।। २.४.११४ ।।

अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ।। २.४.११५ ।।

लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ।। २.४.११६ ।।

नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।। २.४.११७ ।।

अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ।। २.४.११८ ।।

समे शाखालते स्कन्धशाखाशाले शिफाजटे ।। २.४.११९ ।।

शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता ।। २.४.१२० ।।

शिरोग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः ।। २.४.१२१ ।।

सारो मज्जा नरि त्वक्स्त्री वल्कं वल्कलमस्त्रियाम् ।। २.४.१२२ ।।

काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ।। २.४.१२३ ।।

निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ ।। २.४.१२४ ।।

पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।। २.४.१२५ ।।

पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ।। २.४.१२६ ।।

वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् ।। २.४.१२७ ।।

आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ।। २.४.१२८ ।।

क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ।। २.४.१२९ ।।

स्याद्गुच्छकस्तु स्तबकः कुङ्मलो मुकुलोऽस्त्रियाम् ।। २.४.१३० ।।

स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।। २.४.१३१ ।।

मकरन्दः पुष्परसः परागः सुमनोरजः ।। २.४.१३२ ।।

द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ।। २.४.१३३ ।।

आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ।। २.४.१३४ ।।

बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।। २.४.१३५ ।।

पुष्पे जातीप्रभृतयः स्वलिङ्गाः व्रीहयः फले ।। २.४.१३६ ।।

विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ।। २.४.१३७ ।।

बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ।। २.४.१३८ ।।

अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।। २.४.१३९ ।।

तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ।। २.४.१४० ।।

उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।। २.४.१४१ ।।

कोविदारे चमरिकः कुद्दालो युगपत्रकः ।। २.४.१४२ ।।

सप्तपर्णो विशालत्वक्शारदो विषमच्छदः ।। २.४.१४३ ।।

आरग्वधे राजवृक्षशम्पाकचतुरङ्गुलाः ।। २.४.१४४ ।।

आरेवतव्याधिघातकृतमालसुवर्णकाः ।। २.४.१४५ ।।

स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ।। २.४.१४६ ।।

वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः ।। २.४.१४७ ।।

पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ।। २.४.१४८ ।।

पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।। २.४.१४९ ।।

तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ।। २.४.१५० ।।

वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ।। २.४.१५१ ।।

आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ।। २.४.१५२ ।।

वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ।। २.४.१५३ ।।

पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसम्भवे ।। २.४.१५४ ।।

अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः ।। २.४.१५५ ।।

पलाशे किंशुकः पर्णो वातपोतोऽथ वेतसे ।। २.४.१५६ ।।

रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ।। २.४.१५७ ।।

द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ।। २.४.१५८ ।।

शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ।। २.४.१५९ ।।

रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ।। २.४.१६० ।।

बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ।। २.४.१६१ ।।

प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ।। २.४.१६२ ।।

गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।। २.४.१६३ ।।

आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।। २.४.१६४ ।।

कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।। २.४.१६५ ।।

शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ।। २.४.१६६ ।।

राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुःपटः ।। २.४.१६७ ।।

गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ।। २.४.१६८ ।।

श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ।। २.४.१६९ ।।

कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले ।। २.४.१७० ।।

सौवीरं बदरं घोण्टाप्यथ स्यात्स्वादुकण्टकः ।। २.४.१७१ ।।

विकङ्कतः सुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ।। २.४.१७२ ।।

ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ।। २.४.१७३ ।।

तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ।। २.४.१७४ ।।

काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ।। २.४.१७५ ।।

गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ।। २.४.१७६ ।।

तिलकः क्षुरकः श्रीमान्समौ पिचुलझावुकौ ।। २.४.१७७ ।।

श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ ।। २.४.१७८ ।।

क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।। २.४.१७९ ।।

तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ।। २.४.१८० ।।

तूलं च नीपप्रियककदम्बास्तु हरिप्रियः ।। २.४.१८१ ।।

वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ।। २.४.१८२ ।।

गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ।। २.४.१८३ ।।

प्लक्षश्च तिन्तिडी चिञ्चाम्लिकाथो पीतसारके ।। २.४.१८४ ।।

सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।। २.४.१८५ ।।

साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ।। २.४.१८६ ।।

नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।। २.४.१८७ ।।

राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ।। २.४.१८८ ।।

इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ।। २.४.१८९ ।।

पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ।। २.४.१९० ।।

पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ।। २.४.१९१ ।।

चिरबिल्वो नक्तमालः करजश्च करञ्जके ।। २.४.१९२ ।।

प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ।। २.४.१९३ ।।

करञ्जभेदाः ष्ड्ग्रन्थो मर्कट्यङ्गारवल्लरी ।। २.४.१९४ ।।

रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।। २.४.१९५ ।।

गायत्री बालतनयः खदिरो दन्तधावनः ।। २.४.१९६ ।।

अरिमेदो विट्खदिरे कदरः खदिरे सिते ।। २.४.१९७ ।।

सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ।। २.४.१९८ ।।

एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।। २.४.१९९ ।।

चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ।। २.४.२०० ।।

अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ।। २.४.२०१ ।।

पिण्डीतको मरुबकः श्वसनः करहाटकः ।। २.४.२०२ ।।

शल्यश्च मदने शक्रपादपः पारिभद्रकः ।। २.४.२०३ ।।

भद्रदारु द्रुकिलिमं पीतदारु च दारु च ।। २.४.२०४ ।।

पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ।। २.४.२०५ ।।

पाटलिः पाटलामोघा काचस्थाली फलेरुहा ।। २.४.२०६ ।।

कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ।। २.४.२०७ ।।

लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ।। २.४.२०८ ।।

विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ।। २.४.२०९ ।।

मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ।। २.४.२१० ।।

स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ।। २.४.२११ ।।

अमृता च वयःस्था च त्रिलिङ्गस्तु बिभीतकः ।। २.४.२१२ ।।

नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ।। २.४.२१३ ।।

अभया त्वव्यथा पथ्या कायस्था पूतनामृता ।। २.४.२१४ ।।

करीतकी हैमवती चेतकी श्रेयसी शिवा ।। २.४.२१५ ।।

पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ।। २.४.२१६ ।।

कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ।। २.४.२१७ ।।

पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः ।। २.४.२१८ ।।

काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ।। २.४.२१९ ।।

अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।। २.४.२२० ।।

पिचुमन्दश्च निम्बेऽथ पिच्छिलागुरुशिंशपा ।। २.४.२२१ ।।

कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ।। २.४.२२२ ।।

भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ।। २.४.२२३ ।।

एतस्य कलिका गन्धफली स्यादथ केसरे ।। २.४.२२४ ।।

बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ।। २.४.२२५ ।।

चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।। २.४.२२६ ।।

जया जयन्ती तर्कारी नादेयी वैजयन्तिका ।। २.४.२२७ ।।

श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका ।। २.४.२२८ ।।

जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ।। २.४.२२९ ।।

एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ।। २.४.२३० ।।

कृष्णपाकफलाविग्नसुषेणाः करमर्दके ।। २.४.२३१ ।।

कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके ।। २.४.२३२ ।।

सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ।। २.४.२३३ ।।

वेणी गरा गरी देवताडो जीमूत इत्यपि ।। २.४.२३४ ।।

श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ।। २.४.२३५ ।।

भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ।। २.४.२३६ ।।

शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।। २.४.२३७ ।।

सितासौ श्वेतसुरसा भूतवेश्यथ मागधी ।। २.४.२३८ ।।

गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिका ।। २.४.२३९ ।।

अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ।। २.४.२४० ।।

सुमना मालती जातिः सप्तला नवमालिका ।। २.४.२४१ ।।

माध्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः ।। २.४.२४२ ।।

सहा कुमारी तरणिरम्लानस्तु महासहा ।। २.४.२४३ ।।

तत्र शोणे कुरबकस्तत्र पीते कुरकण्टकः ।। २.४.२४४ ।।

नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ।। २.४.२४५ ।।

सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरबकोऽरुणे ।। २.४.२४६ ।।

पीता कुरण्टको झिण्टी तस्मिन्सहचरी द्वयोः ।। २.४.२४७ ।।

ओण्ड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ।। २.४.२४८ ।।

प्रतिहासशतप्रासचण्डातहयमारकाः ।। २.४.२४९ ।।

करवीरे करीरे तु क्रकरग्रन्थिलावुभौ ।। २.४.२५० ।।

उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ।। २.४.२५१ ।।

मातुलो मदनश्चास्य फले मातुलपुत्रकः ।। २.४.२५२ ।।

फलपूरो बीजपूरो रुचको मातुलुङ्गके ।। २.४.२५३ ।।

समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ।। २.४.२५४ ।।

जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ।। २.४.२५५ ।।

सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ।। २.४.२५६ ।।

अर्काह्ववसुकास्फोटगणरूपविकीरणाः ।। २.४.२५७ ।।

मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ।। २.४.२५८ ।।

शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ।। २.४.२५९ ।।

वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ।। २.४.२६० ।।

वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता ।। २.४.२६१ ।।

जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ।। २.४.२६२ ।।

मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ।। २.४.२६३ ।।

मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।। २.४.२६४ ।।

पाटाम्बष्टा विद्धकर्न्णी स्थापनी श्रेयसी रसा ।। २.४.२६५ ।।

एकाष्टीला पापचेली प्राचीना वनतिक्तिका ।। २.४.२६६ ।।

कटुः कटम्भराशोकरोहिणी कटुरोहिणी ।। २.४.२६७ ।।

मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।। २.४.२६८ ।।

आत्मगुप्ताजहाव्यण्डा कण्डूरा प्रावृषायणी ।। २.४.२६९ ।।

ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।। २.४.२७० ।।

चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृशा ।। २.४.२७१ ।।

प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।। २.४.२७२ ।।

अपामार्गः शैखरिको धामार्गवमयूरकौ ।। २.४.२७३ ।।

प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ।। २.४.२७४ ।।

हञ्जिका ब्राम्हणी पद्मा भर्गी ब्राह्मणयष्टिका ।। २.४.२७५ ।।

अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ।। २.४.२७६ ।।

मञ्जिष्टा विकसा जिङ्गी समङ्गा कालमेषिका ।। २.४.२७७ ।।

मण्डूकपर्णी मण्डीरी भण्डी योजनवल्ल्यपि ।। २.४.२७८ ।।

यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।। २.४.२७९ ।।

रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा ।। २.४.२८० ।।

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ।। २.४.२८१ ।।

क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा ।। २.४.२८२ ।।

निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ।। २.४.२८३ ।।

प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।। २.४.२८४ ।।

नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।। २.४.२८५ ।।

रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ।। २.४.२८६ ।।

अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ।। २.४.२८७ ।।

कालमेषी कृष्णफली बाकुची पूतिफल्यपि ।। २.४.२८८ ।।

कृष्णोपकुल्या वैदेही मागधी चपला कणा ।। २.४.२८९ ।।

उषणा पिप्पली शौण्डी कोलाथ करिपिप्पली ।। २.४.२९० ।।

कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ।। २.४.२९१ ।।

चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला ।। २.४.२९२ ।।

पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ।। २.४.२९३ ।।

गोकण्टको गोक्षुरको वनशृन्ङ्गाट इत्यपि ।। २.४.२९४ ।।

विश्वा विषा प्रतिविषातिविषोपविषारुणा ।। २.४.२९५ ।।

शृन्गी महौषधं चाथ क्षीरावी दुग्धिका समे ।। २.४.२९६ ।।

शतमूली बहुसुताभीरूरिन्दीवरी वरी ।। २.४.२९७ ।।

ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी ।। २.४.२९८ ।।

अहेरुरथ पीतद्रुकालीयकहरिद्रवः ।। २.४.२९९ ।।

दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ।। २.४.३०० ।।

वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ।। २.४.३०१ ।।

शुक्ला हैमवती वैध्यमातृसिंह्यौ तु वाशिका ।। २.४.३०२ ।।

वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ।। २.४.३०३ ।।

आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता ।। २.४.३०४ ।।

इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ।। २.४.३०५ ।।

शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ।। २.४.३०६ ।।

मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक्स्त्री स्नुही गुडा ।। २.४.३०७ ।।

समन्तदुग्धाथो वेल्लममोघा चित्रतण्डुला ।। २.४.३०८ ।।

तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ।। २.४.३०९ ।।

बला वाट्यालका घण्टारवा तु शणपुष्पिका ।। २.४.३१० ।।

मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ।। २.४.३११ ।।

सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।। २.४.३१२ ।।

त्रिभण्डी रोचनी श्यामापालिन्ध्यौ तु सुषेणिका ।। २.४.३१३ ।।

काला मसूरविदलार्धचन्द्रा कालमेषिका ।। २.४.३१४ ।।

मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ।। २.४.३१५ ।।

विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्टी तु या सिता ।। २.४.३१६ ।।

अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ।। २.४.३१७ ।।

लाङ्गली शारदी तोयपिप्पली शकुलादनी ।। २.४.३१८ ।।

खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ।। २.४.३१९ ।।

गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।। २.४.३२० ।।

योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ।। २.४.३२१ ।।

कदली वारणबुसा रम्भा मोचांशुमत्फला ।। २.४.३२२ ।।

काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ।। २.४.३२३ ।।

वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ।। २.४.३२४ ।।

नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ।। २.४.३२५ ।।

नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ।। २.४.३२६ ।।

विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ।। २.४.३२७ ।।

तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ।। २.४.३२८ ।।

भारद्वाजी तु सा वन्या शृङ्गी तु ऋषभो वृशः ।। २.४.३२९ ।।

गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ।। २.४.३३० ।।

धामार्गवो घोशकः स्यान्महाजाली स पीतकः ८८३ ।। २.४.३३१ ।।

ज्योत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ।। २.४.३३२ ।।

स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ।। २.४.३३३ ।।

गोधापदी तु सुवहा मुसली तालमूलिका ।। २.४.३३४ ।।

अजशृङ्गी विषाणी स्याद्गोजिह्वादार्विके समे ।। २.४.३३५ ।।

ताम्बूलवल्ली तम्बूली नागवल्ल्यप्यथ द्विजा ।। २.४.३३६ ।।

हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ।। २.४.३३७ ।।

एलावालुकमैलेयं सुगन्धि हरिवालुकम् ।। २.४.३३८ ।।

वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ।। २.४.३३९ ।।

बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ।। २.४.३४० ।।

कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ।। २.४.३४१ ।।

शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ।। २.४.३४२ ।।

गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ।। २.४.३४३ ।।

महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।। २.४.३४४ ।।

अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ।। २.४.३४५ ।।

पृथ्वीका चन्द्रवालैला निष्कुटिर्बहिलाथ सा ।। २.४.३४६ ।।

सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ।। २.४.३४७ ।।

व्याधिः कुष्टं पारिभाव्यं वाप्यं पाकलमुत्पलम् ।। २.४.३४८ ।।

शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः ।। २.४.३४९ ।।

झटामलाज्झटा ताली शिवा तामलकीति च ।। २.४.३५० ।।

प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः ।। २.४.३५१ ।।

कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ।। २.४.३५२ ।।

चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ।। २.४.३५३ ।।

व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ।। २.४.३५४ ।।

सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ।। २.४.३५५ ।।

धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ।। २.४.३५६ ।।

शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी ।। २.४.३५७ ।।

काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे ।। २.४.३५८ ।।

कुटन्नटं दाशपुरं वानेयं परिपेलवम् ।। २.४.३५९ ।।

प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ।। २.४.३६० ।।

ग्रन्थिपर्णं शुकं बर्हम् पुष्पं स्थौणेयकुक्कुरे ।। २.४.३६१ ।।

मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।। २.४.३६२ ।।

समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ।। २.४.३६३ ।।

तपस्विनी जटामांसी जटिला लोमशामिषी ।। २.४.३६४ ।।

त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ।। २.४.३६५ ।।

कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ।। २.४.३६६ ।।

ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ।। २.४.३६७ ।।

शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः ।। २.४.३६८ ।।

विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ।। २.४.३६९ ।।

स्याद्दक्षगन्धा छगलान्त्रयावेगी वृद्धदारकः ।। २.४.३७० ।।

जुङ्गो ब्रम्ही तु मत्स्याक्षी वयःस्था सोमवल्लरी ।। २.४.३७१ ।।

पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ।। २.४.३७२ ।।

हयपुच्छी तु काम्बोजी माषपर्णी महासहा ।। २.४.३७३ ।।

तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।। २.४.३७४ ।।

बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका ।। २.४.३७५ ।।

एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ।। २.४.३७६ ।।

चाङ्गेरी चुक्रिका दन्तशटाम्बष्ठाम्ललोणिका ।। २.४.३७७ ।।

सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।। २.४.३७८ ।।

नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ।। २.४.३७९ ।।

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ।। २.४.३८० ।।

कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ।। २.४.३८१ ।।

किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला ।। २.४.३८२ ।।

विमला सातला भूरिफेना चर्मकषेत्यपि ।। २.४.३८३ ।।

वायसोली स्वादुरसा वयःस्थाथ मकूलकः ।। २.४.३८४ ।।

निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ।। २.४.३८५ ।।

अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।। २.४.३८६ ।।

मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ।। २.४.३८७ ।।

अव्यथातिचरा पद्मा चारटी पद्मचारिणी ।। २.४.३८८ ।।

काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ।। २.४.३८९ ।।

प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चकमर्दकः ।। २.४.३९० ।।

पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः ।। २.४.३९१ ।।

लतार्कदुद्रुमौ तत्र हरितेऽथ महौषधम् ।। २.४.३९२ ।।

लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ।। २.४.३९३ ।।

पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ।। २.४.३९४ ।।

स्याद्वाअतकः शीतलोऽपराजिता शणपर्ण्यपि ।। २.४.३९५ ।।

पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।। २.४.३९६ ।।

वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ।। २.४.३९७ ।।

विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ।। २.४.३९८ ।।

मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी ।। २.४.३९९ ।।

शतपुष्पा सितच्छत्रातिच्छत्रा मधुरा मिसिः ।। २.४.४०० ।।

अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ।। २.४.४०१ ।।

तस्यां कटंभरा राजबला भद्रबलेत्यपि ।। २.४.४०२ ।।

जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ।। २.४.४०३ ।।

संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।। २.४.४०४ ।।

कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः ।। २.४.४०५ ।।

सुषवी चाथ कुलकं पतोलस्तिक्तकः पटुः ।। २.४.४०६ ।।

कूष्माण्डकस्तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ ।। २.४.४०७ ।।

इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे ।। २.४.४०८ ।।

चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी ।। २.४.४०९ ।।

अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला ।। २.४.४१० ।।

कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका ।। २.४.४११ ।।

वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ।। २.४.४१२ ।।

सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता ।। २.४.४१३ ।।

गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ।। २.४.४१४ ।।

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ।। २.४.४१५ ।।

स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा ।। २.४.४१६ ।।

वंशे त्वक्सारकर्मारत्वाचिसारतृणध्वजाः ।। २.४.४१७ ।।

शतपर्वा यवफलो वेणुमस्करतेजनाः ९७० ।। २.४.४१८ ।।

वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।। २.४.४१९ ।।

ग्रन्थिर्ना पर्वपरुशी गुन्द्रस्तेजनकः शरः ।। २.४.४२० ।।

नडस्तु धमनः पोटकलोऽथो काशमस्त्रियाम् ।। २.४.४२१ ।।

इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः ।। २.४.४२२ ।।

रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ।। २.४.४२३ ।।

स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ।। २.४.४२४ ।।

अभयं नलदं सेव्यममृणालं जलाशयम् ।। २.४.४२५ ।।

लामज्जकं लघुलयमवदाहेष्टकापथे ।। २.४.४२६ ।।

नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ।। २.४.४२७ ।।

अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ९८० ।। २.४.४२८ ।।

पौरसौगन्धिकध्यामदेवेजग्धकरौहिषम् ।। २.४.४२९ ।।

छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ।। २.४.४३० ।।

शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ।। २.४.४३१ ।।

तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ।। २.४.४३२ ।।

तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली ।। २.४.४३३ ।।

घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ।। २.४.४३४ ।।

फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ।। २.४.४३५ ।।

खर्जूरः केतकी ताली खर्जुरी च तृणद्रुमाः ।। २.४.४३६ ।।

।। सिंहादि वर्गः ।।

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।। २.५.४३७ ।।

कण्टीरवो मृगारिपुर्मृगदृष्टिर्मृगाशनः ।। २.५.४३८ ।।

पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः ।। २.५.४३९ ।।

शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ९९० ।। २.५.४४० ।।

वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।। २.५.४४१ ।।

दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ।। २.५.४४२ ।।

कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।। २.५.४४३ ।।

मर्कटो वानरः कीशो वनौका अथ भल्लुके ।। २.५.४४४ ।।

ऋक्षाच्छभल्लभल्लूका गण्डके खड्गखड्गिनौ ।। २.५.४४५ ।।

लुलायो महिषो वाहाद्विषत्कासरसैरिभाः ।। २.५.४४६ ।।

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।। २.५.४४७ ।।

शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ।। २.५.४४८ ।।

ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ।। २.५.४४९ ।।

त्रयो गौधेरगौधारगौधेया गोधिकात्मजे १००० ।। २.५.४५० ।।

श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।। २.५.४५१ ।।

वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः ।। २.५.४५२ ।।

मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।। २.५.४५३ ।।

ऐणेयमेण्याश्चर्माध्यमेणस्यैणमुभे त्रिषु ।। २.५.४५४ ।।

कदली कन्दली चीनश्चमूरुप्रियकावपि ।। २.५.४५५ ।।

समूरुश्चेति हरिणा अमी अजिनयोनयः ।। २.५.४५६ ।।

कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।। २.५.४५७ ।।

गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ।। २.५.४५८ ।।

गन्धर्वः शरभो रामः सृमरो गवयः शशः ।। २.५.४५९ ।।

इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः १०१० ।। २.५.४६० ।।

अधोगन्ता तु खनको वृकः पुन्ध्वज उन्दुरः ।। २.५.४६१ ।।

उन्दुरुर्मूषकोऽप्याखुर्गिरिका बालमूषिका ।। २.५.४६२ ।।

चुचुन्दरी गन्धमूषी दीर्घदेही तु मूषिका ।। २.५.४६३ ।।

सरटः कृकलासः स्यान्मुसली गृहगोधिका ।। २.५.४६४ ।।

लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।। २.५.४६५ ।।

नीलङ्गुस्तु कृमिः कर्णजलौकाः शतपद्युभे ।। २.५.४६६ ।।

वृश्चिकः शूककीटः स्यादलिद्रुणौ तु वृश्चिके ।। २.५.४६७ ।।

पारावतः कलरवः कपोतोऽथ शशादनः ।। २.५.४६८ ।।

पत्री श्येन उलूकस्तु वायसारातिपेचकौ ।। २.५.४६९ ।।

दिवान्धः कौशिको घूको दिवाभीतो निशाटनः ।। २.५.४७० ।।

व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः ।। २.५.४७१ ।।

लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः ।। २.५.४७२ ।।

कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः १०२० ।। २.५.४७३ ।।

दार्वाघाटोऽथ सारङ्गः स्तोककश्चातकः समाः ।। २.५.४७४ ।।

कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः || २.५.४७५ ||

चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः || २.५.४७६ ||

पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव सा || २.५.४७७ ||

कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ || २.५.४७८ ||

वनप्रियः परभृतः कोकिलः पिक इत्यपि || २.५.४७९ ||

काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः || २.५.४८० ||

ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि || २.५.४८१ ||

स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः || २.५.४८२ ||

द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः || २.५.४८३ ||

आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ १०३० || २.५.४८४ ||

क्रुङ्क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः || २.५.४८५ ||

कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः || २.५.४८६ ||

कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ || २.५.४८७ ||

हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः || २.५.४८८ ||

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः || २.५.४८९ ||

मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः || २.५.४९० ||

शरारिराटिराडिश्च बलाका बिसकण्ठिका || २.५.४९१ ||

हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा || २.५.४९२ ||

जतुकाजिनपत्रा स्यात्परोष्णी तैलपायिका || २.५.४९३ ||

वर्वणा मक्षिका नीला सरघा मधुमक्षिका १०४० || २.५.४९४ ||

पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका ।। २.५.४९५ ।।

दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ।। २.५.४९६ ।।

भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ।। २.५.४९७ ।।

समौ पतङ्गशलभौ खध्योतो ज्योतिरिङ्गणः ।। २.५.४९८ ।।

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।। २.५.४९९ ।।

द्विरेफपुष्पलिड्भृङ्ग षट्पद भ्रमरालयः ।। २.५.५०० ।।

मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक् ।। २.५.५०१ ।।

शिखावलः शिखी केकी मेघनादानुलास्यपि ।। २.५.५०२ ।।

केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ।। २.५.५०३ ।।

शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ।। २.५.५०४ ।।

खगे विहङ्गविहगविहङ्गमविहायसः ।। २.५.५०५ ।।

शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ।। २.५.५०६ ।।

पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।। २.५.५०७ ।।

नगौकोवाजिविकिरविविष्किरपतत्रयः ।। २.५.५०८ ।।

नीडोद्भवाः गरुत्मन्तः पित्सन्तो नभसंगमाः ।। २.५.५०९ ।।

तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ।। २.५.५१० ।।

तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्च कोरकः ।। २.५.५११ ।।

कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ।। २.५.५१२ ।।

गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ।। २.५.५१३ ।।

स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ।। २.५.५१४ ।।

प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।। २.५.५१५ ।।

पेशी कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ।। २.५.५१६ ।।

पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।। २.५.५१७ ।।

स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगुलं युगम् ।। २.५.५१८ ।।

समूहे निवहव्यूहसन्दोहविसरव्रजाः ।। २.५.५१९ ।।

स्तोमौघनिकरत्रातवारसंघातसंचयाः ।। २.५.५२० ।।

समुदायः समुदयः समवायश्च यो गणः ।। २.५.५२१ ।।

स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ।। २.५.५२२ ।।

वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः ।। २.५.५२३ ।।

सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् ।। २.५.५२४ ।।

पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ।। २.५.५२५ ।।

स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ।। २.५.५२६ ।।

कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।। २.५.५२७ ।।

गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ।। २.५.५२८ ।।

।। मनुष्यवर्गः ।।

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।। २.६.५२९ ।।

स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ।। २.६.५३० ।।

स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।। २.६.५३१ ।।

प्रतीपदर्शिनी वामा वनिता महिला तथा ।। २.६.५३२ ।।

विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।। २.६.५३३ ।।

प्रमदा मानिनी कान्ता ललना च नितम्बिनी ।। २.६.५३४ ।।

सुन्दरी रमणी रामा कोपना सैव भामिनी ।। २.६.५३५ ।।

वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ।। २.६.५३६ ।।

कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः ।। २.६.५३७ ।।

पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ।। २.६.५३८ ।।

भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।। २.६.५३९ ।।

पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ।। २.६.५४० ।।

कृतसापत्निकाध्यूढाधिविन्नाथ स्वयंवरा ।। २.६.५४१ ।।

पतिंवरा च वर्याथ कुलस्त्री कुलपालिका ।। २.६.५४२ ।।

कन्या कुमारी गौरी तु नग्निकानागतार्तवा ।। २.६.५४३ ।।

स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ।। २.६.५४४ ।।

समाः स्नुषाजनीवध्वश्चिरिण्टी तु सुवासिनी ।। २.६.५४५ ।।

इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी ।। २.६.५४६ ।।

कान्तार्थिनी तु या याति संकेतं साभिसारिका ।। २.६.५४७ ।।

पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ।। २.६.५४८ ।।

स्वैरिणी पांसुला च स्यादशिश्वी शिशुना विना ।। २.६.५४९ ।।

अवीरा निष्पतिसुता विश्वस्ताविधवे समे ।। २.६.५५० ।।

आलिः सखी वयस्याथ पतिवत्नी सभर्तृका ।। २.६.५५१ ।।

वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ।। २.६.५५२ ।।

शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ।। २.६.५५३ ।।

आभीरी तु महाशूद्री जातिपुंयोगयोः समा ।। २.६.५५४ ।।

अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ।। २.६.५५५ ।।

उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ।। २.६.५५६ ।।

आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।। २.६.५५७ ।।

उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ।। २.६.५५८ ।।

वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।। २.६.५५९ ।।

जातापत्या प्रजाता च प्रसूता च प्रसूतिका ।। २.६.५६० ।।

स्त्री नग्निका कोटवी स्याद्दूतीसंचारिके समे ।। २.६.५६१ ।।

कात्यायन्यर्धवृद्धा या काषायवसनाधवा ।। २.६.५६२ ।।

सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।। २.६.५६३ ।।

असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी ।। २.६.५६४ ।।

वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः ।। २.६.५६५ ।।

सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे ।। २.६.५६६ ।।

विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला ।। २.६.५६७ ।।

स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ।। २.६.५६८ ।।

ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ।। २.६.५६९ ।।

श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ।। २.६.५७० ।।

आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।। २.६.५७१ ।।

गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ।। २.६.५७२ ।।

पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः ।। २.६.५७३ ।।

स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ।। २.६.५७४ ।।

कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ।। २.६.५७५ ।।

सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ।। २.६.५७६ ।।

पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।। २.६.५७७ ।।

सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ।। २.६.५७८ ।।

अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।। २.६.५७९ ।।

कौलटेरः कौलतेयो भिक्षुकी तु सती यदि ।। २.६.५८० ।।

तदा कौलटिनेयोऽस्याः कौलतेयोऽपि चात्मजः ।। २.६.५८१ ।।

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।। २.६.५८२ ।।

आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ।। २.६.५८३ ।।

स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ।। २.६.५८४ ।।

जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।। २.६.५८५ ।।

ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ।। २.६.५८६ ।।

भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।। २.६.५८७ ।।

प्रजावती भ्रातृजाया मातुलानी तु मातुली ।। २.६.५८८ ।।

पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।। २.६.५८९ ।।

पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ।। २.६.५९० ।।

श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।। २.६.५९१ ।।

स्वस्रीयो भागिनेयः स्याज्जमाता दुहितुः पतिः ।। २.६.५९२ ।।

पितामहः पितृपिता तत्पिता प्रपितामहः ।। २.६.५९३ ।।

मातुर्मातामहाद्येवं सपिण्दास्तु सनाभयः ।। २.६.५९४ ।।

समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।। २.६.५९५ ।।

सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ।। २.६.५९६ ।।

ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।। २.६.५९७ ।।

धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ।। २.६.५९८ ।।

अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।। २.६.५९९ ।।

भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ।। २.६.६०० ।।

मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।। २.६.६०१ ।।

श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ।। २.६.६०२ ।।

दंपती जंपती जायापती भार्यापती च तौ ।। २.६.६०३ ।।

गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ।। २.६.६०४ ।।

सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ।। २.६.६०५ ।।

तृतीयाप्रकृतिः शण्ढः क्लीबः पण्दो नपुंसके ।। २.६.६०६ ।।

शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ।। २.६.६०७ ।।

स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ।। २.६.६०८ ।।

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ।। २.६.६०९ ।।

स्यादुत्तानशया डिम्भा स्तनपा च स्तनन्धयी ।। २.६.६१० ।।

बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा ।। २.६.६११ ।।

प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ।। २.६.६१२ ।।

वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ।। २.६.६१३ ।।

जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ।। २.६.६१४ ।।

अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः ।। २.६.६१५ ।।

तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ।। २.६.६१६ ।।

अवटीटोऽवनाटश्चावभ्रटो नतनासिके ।। २.६.६१७ ।।

केशवः केशिकः केशी वलिनो वलिभः समौ ।। २.६.६१८ ।।

विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः ।। २.६.६१९ ।।

खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ।। २.६.६२० ।।

खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः ।। २.६.६२१ ।।

ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ।। २.६.६२२ ।।

स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः ।। २.६.६२३ ।।

पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ।। २.६.६२४ ।।

वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः ।। २.६.६२५ ।।

जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ।। २.६.६२६ ।।

अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ।। २.६.६२७ ।।

भेषजौषधभैषज्यान्यगदो जायुरित्यपि ।। २.६.६२८ ।।

स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ।। २.६.६२९ ।।

क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ।। २.६.६३० ।।

स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान् ।। २.६.६३१ ।।

शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ।। २.६.६३२ ।।

किलाससिध्मे कच्छ्वां तु पाम पामा विचर्चिका ।। २.६.६३३ ।।

कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकः स्त्रियाम् ।। २.६.६३४ ।।

व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ।। २.६.६३५ ।।

कोठो मण्डलकं कुश्ठश्वित्रे दुर्नामकार्शसी ।। २.६.६३६ ।।

आनाहस्तु निबन्धः स्याद्ग्रहणीरुक्प्रवाहिका ।। २.६.६३७ ।।

प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ।। २.६.६३८ ।।

व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः ।। २.६.६३९ ।।

श्लीपदं पादवल्मीकं केशघ्नस्त्विन्द्रलुप्तकः ।। २.६.६४० ।।

अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ।। २.६.६४१ ।।

रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।। २.६.६४२ ।।

वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ।। २.६.६४३ ।।

ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ।। २.६.६४४ ।।

आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ।। २.६.६४५ ।।

दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ।। २.६.६४६ ।।

वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ।। २.६.६४७ ।।

स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ।। २.६.६४८ ।।

उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ।। २.६.६४९ ।।

न्युब्जो भुग्ने रुजा वृद्धनाभौ तुन्दिलतुन्दिभौ ।। २.६.६५० ।।

विलासी सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्तमूर्च्छितौ ।। २.६.६५१ ।।

शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।। २.६.६५२ ।।

मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा ।। २.६.६५३ ।।

पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।। २.६.६५४ ।।

उत्ततप्तं शुश्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ।। २.६.६५५ ।।

रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।। २.६.६५६ ।।

बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ।। २.६.६५७ ।।

पश्चाद्ग्रीवाशिरा मन्या नाडी तु धमनिः शिरा ।। २.६.६५८ ।।

तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् ।। २.६.६५९ ।।

अन्त्रं पुरीतगुल्मस्तु प्लीहा पुंस्यथ वस्नसा ।। २.६.६६० ।।

स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे ।। २.६.६६१ ।।

सृणिका स्यन्दनी लाला दूषिका नेत्रयोर्मलम् ।। २.६.६६२ ।।

नासामलं तु सिंघाणं पिञ्जूषं कर्णयोर्मलम् ।। २.६.६६३ ।।

मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ।। २.६.६६४ ।।

पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ।। २.६.६६५ ।।

स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ।। २.६.६६६ ।।

स्याच्छरीरास्थ्नि कंकालः पृष्ठास्थ्नि तु कशेरुका ।। २.६.६६७ ।।

शिरोस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ।। २.६.६६८ ।।

अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।। २.६.६६९ ।।

गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।। २.६.६७० ।।

कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।। २.६.६७१ ।।

पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ।। २.६.६७२ ।।

तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः ।। २.६.६७३ ।।

जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ।। २.६.६७४ ।।

सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि वङ्क्षणः ।। २.६.६७५ ।।

गुदं त्वपानं पायुर्ना बस्तिर्नाभेरधो द्वयोः ।। २.६.६७६ ।।

कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।। २.६.६७७ ।।

पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।। २.६.६७८ ।।

कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे ।। २.६.६७९ ।।

स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ।। २.६.६८० ।।

भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी ।। २.६.६८१ ।।

मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ।। २.६.६८२ ।।

पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ ।। २.६.६८३ ।।

चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ।। २.६.६८४ ।।

उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।। २.६.६८५ ।।

स्कन्धो भुजशिरोंसोऽस्त्री सन्धी तस्यैव जत्रुणी ।। २.६.६८६ ।।

बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ।। २.६.६८७ ।।

मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ।। २.६.६८८ ।।

भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्परः ।। २.६.६८९ ।।

अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ।। २.६.६९० ।।

मणीबन्धादाकनिष्ठं करस्य करभो बहिः ।। २.६.६९१ ।।

पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी ।। २.६.६९२ ।।

अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ।। २.६.६९३ ।।

मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ।। २.६.६९४ ।।

पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।। २.६.६९५ ।।

प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ।। २.६.६९६ ।।

अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।। २.६.६९७ ।।

पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ।। २.६.६९८ ।।

द्वौ संहतौ संहततलप्रतलौ वामदक्षिणौ ।। २.६.६९९ ।।

पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ।। २.६.७०० ।।

प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।। २.६.७०१ ।।

स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ।। २.६.७०२ ।।

व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगनन्तरम् ।। २.६.७०३ ।।

ऊर्ध्वविस्तृतदोः पाणिनृमाने पौरुषं त्रिषु ।। २.६.७०४ ।।

कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।। २.६.७०५ ।।

कम्बुग्रीवा त्रिरेखा सावटुर्घाटा कृकाटिका ।। २.६.७०६ ।।

वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।। २.६.७०७ ।।

क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ।। २.६.७०८ ।।

ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।। २.६.७०९ ।।

अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः ।। २.६.७१० ।।

रदना दशना दन्ता रदास्तालु तु काकुदम् ।। २.६.७११ ।।

रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ।। २.६.७१२ ।।

ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।। २.६.७१३ ।।

कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ।। २.६.७१४ ।।

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।। २.६.७१५ ।।

दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ।। २.६.७१६ ।।

अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ।। २.६.७१७ ।।

कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ।। २.६.७१८ ।।

उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ।। २.६.७१९ ।।

चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ।। २.६.७२० ।।

तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः ।। २.६.७२१ ।।

ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ।। २.६.७२२ ।।

कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः ।। २.६.७२३ ।।

शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ।। २.६.७२४ ।।

वेणी प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ।। २.६.७२५ ।।

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।। २.६.७२६ ।।

तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुम्मुखे ।। २.६.७२७ ।।

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ।। २.६.७२८ ।।

दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डितः ।। २.६.७२९ ।।

प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ।। २.६.७३० ।।

विभ्राड्भ्राजिष्णुरोचिष्णू भूषणं स्यादलंक्रिया ।। २.६.७३१ ।।

अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ।। २.६.७३२ ।।

मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ।। २.६.७३३ ।।

चूदामणिः शिरोरत्नं तरलो हारमध्यगः ।। २.६.७३४ ।।

वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ।। २.६.७३५ ।।

कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् ।। २.६.७३६ ।।

ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका ।। २.६.७३७ ।।

स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ।। २.६.७३८ ।।

हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका ।। २.६.७३९ ।।

हारभेदा यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ।। २.६.७४० ।।

अर्धहारो माणवक एकावल्येकयष्टिका ।। २.६.७४१ ।।

सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ।। २.६.७४२ ।।

आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।। २.६.७४३ ।।

केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ।। २.६.७४४ ।।

साक्षराङ्गुलिमुद्रा स्यात्कङ्कणं करभूषणम् ।। २.६.७४५ ।।

स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ।। २.६.७४६ ।।

क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ।। २.६.७४७ ।।

पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ।। २.६.७४८ ।।

हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका ।। २.६.७४९ ।।

त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ।। २.६.७५० ।।

वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ।। २.६.७५१ ।।

कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ।। २.६.७५२ ।।

अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।। २.६.७५३ ।।

तस्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ।। २.६.७५४ ।।

पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ।। २.६.७५५ ।।

क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ।। २.६.७५६ ।।

स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः ।। २.६.७५७ ।।

दैर्घ्यमायाम आरोहः परिणाहो विशालता ।। २.६.७५८ ।।

पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ।। २.६.७५९ ।।

वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ।। २.६.७६० ।।

सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः ।। २.६.७६१ ।।

निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ।। २.६.७६२ ।।

अन्तरीयोपसंव्यानपरिधानान्यधोंशुके ।। २.६.७६३ ।।

द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ।। २.६.७६४ ।।

संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ।। २.६.७६५ ।।

नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ।। २.६.७६६ ।।

अर्धोरुकं वरस्त्रीणां स्याच्छण्डातकमस्त्रियाम् ।। २.६.७६७ ।।

स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ।। २.६.७६८ ।।

अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ।। २.६.७६९ ।।

प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ।। २.६.७७० ।।

परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ।। २.६.७७१ ।।

उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ।। २.६.७७२ ।।

स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ।। २.६.७७३ ।।

अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे ।। २.६.७७४ ।।

तमालपत्रतिलकचित्रकाणि विशेषकम् ।। २.६.७७५ ।।

द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ।। २.६.७७६ ।।

काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ।। २.६.७७७ ।।

रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ।। २.६.७७८ ।।

लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।। २.६.७७९ ।।

लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ।। २.६.७८० ।।

कालीयकं च कालानुसार्यं चाथ समार्थकम् ।। २.६.७८१ ।।

वंशिकागुरुराजार्हलोहकृमिजजोङ्गकम् ।। २.६.७८२ ।।

कालागुर्वगुरु स्यात्तु मङ्गल्या मल्लिगन्धि यत् ।। २.६.७८३ ।।

यक्षधूपः सर्जरसो रालसर्वरसावपि ।। २.६.७८४ ।।

बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ ।। २.६.७८५ ।।

तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः ।। २.६.७८६ ।।

श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ।। २.६.७८७ ।।

मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ।। २.६.७८८ ।।

कङ्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ।। २.६.७८९ ।।

तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ।। २.६.७९० ।।

तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।। २.६.७९१ ।।

कुचन्दनं चाथ जातीकोशजातीफले समे ।। २.६.७९२ ।।

कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।। २.६.७९३ ।।

गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ।। २.६.७९४ ।।

चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ।। २.६.७९५ ।।

संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ।। २.६.७९६ ।।

माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।। २.६.७९७ ।।

प्रभ्रष्तकं शिखालम्बि पुरोन्यस्तं ललामकम् ।। २.६.७९८ ।।

प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षिकं तु तत् ।। २.६.७९९ ।।

यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ।। २.६.८०० ।।

रचना स्यात्परिस्यन्द आभोगः परिपूर्णता ।। २.६.८०१ ।।

उपधानं तूपबर्हः शय्यायां शयनीयवत् ।। २.६.८०२ ।।

शयनं मञ्चपर्यङ्कपल्यङ्काः खट्व्या समाः ।। २.६.८०३ ।।

गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ।। २.६.८०४ ।।

समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ।। २.६.८०५ ।।

प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ।। २.६.८०६ ।।

दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् ।। २.६.८०७ ।।

।। ब्रह्मवर्गः ।।

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।। २.७.८०८ ।।

वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ।। २.७.८०९ ।।

विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।। २.७.८१० ।।

राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः ।। २.७.८११ ।।

महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।। २.७.८१२ ।।

ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ।। २.७.८१३ ।।

आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ।। २.७.८१४ ।।

विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ।। २.७.८१५ ।।

विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः ।। २.७.८१६ ।।

धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ।। २.७.८१७ ।।

धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।। २.७.८१८ ।।

दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ ।। २.७.८१९ ।।

मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि ।। २.७.८२० ।।

वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ।। २.७.८२१ ।।

नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हकः ।। २.७.८२२ ।।

चार्वाकलौकायतिकौ सत्कार्ये सांख्यकापिलौ ।। २.७.८२३ ।।

उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद्गुरुः ।। २.७.८२४ ।।

मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ।। २.७.८२५ ।।

यष्टा च यजमानश्च स सोमवति दीक्षितः ।। २.७.८२६ ।।

इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ।। २.७.८२७ ।।

स गीर्पतीष्टया स्थपतिः सोमपीथी तु सोमपाः ।। २.७.८२८ ।।

सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ।। २.७.८२९ ।।

अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।। २.७.८३० ।।

लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ।। २.७.८३१ ।।

छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ।। २.७.८३२ ।।

एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ।। २.७.८३३ ।।

सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् ।। २.७.८३४ ।।

पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ।। २.७.८३५ ।।

उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः ।। २.७.८३६ ।।

यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ।। २.७.८३७ ।।

पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।। २.७.८३८ ।।

एते पञ्चमहायज्ञा ब्रह्मयज्ञादिनामकाः ।। २.७.८३९ ।।

समज्या परिषद्गोष्ठी सभासमितिसंसदः ।। २.७.८४० ।।

आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ।। २.७.८४१ ।।

प्राग्वंशः प्राघविर्गेहात्सदस्या विधिदर्शिनः ।। २.७.८४२ ।।

सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ।। २.७.८४३ ।।

अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।। २.७.८४४ ।।

आग्नीग्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ।। २.७.८४५ ।।

वेदिः परिष्कृता भुमिः समे स्थण्डिलचत्वरे ।। २.७.८४६ ।।

चषालो यूपकटकः कुम्बा सुगहना वृतिः ।। २.७.८४७ ।।

यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।। २.७.८४८ ।।

दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ।। २.७.८४९ ।।

अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः ।। २.७.८५० ।।

समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ।। २.७.८५१ ।।

यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।। २.७.८५२ ।।

तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया ।। २.७.८५३ ।।

ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।। २.७.८५४ ।।

गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् ।। २.७.८५५ ।।

आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।। २.७.८५६ ।।

धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ।। २.७.८५७ ।।

पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम् ।। २.७.८५८ ।।

हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रुवादिकम् ।। २.७.८५९ ।।

ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।। २.७.८६० ।।

उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ।। २.७.८६१ ।।

परम्पराकं शमनं प्रोक्षणं च वधार्थकम् ।। २.७.८६२ ।।

वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ।। २.७.८६३ ।।

सांनाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ।। २.७.८६४ ।।

दीक्षान्तोऽवभृतो यज्ञे तत्कर्मार्हं तु यज्ञियम् ।। २.७.८६५ ।।

त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत् ।। २.७.८६६ ।।

अमृतं विघसो यज्ञशेषभोजनशेषयोः ।। २.७.८६७ ।।

त्यागो विहापितं दानमुत्सर्जनविसर्जने ।। २.७.८६८ ।।

विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।। २.७.८६९ ।।

प्रादेशनं निर्वपणमपवर्जनमंहतिः ।। २.७.८७० ।।

म्र्तार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ।। २.७.८७१ ।।

पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शस्त्रतः ।। २.७.८७२ ।।

अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ।। २.७.८७३ ।।

पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।। २.७.८७४ ।।

सनिस्त्वध्येषणा याञ्चाभिशस्तिर्याचनार्थना ।। २.७.८७५ ।।

षट्तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ।। २.७.८७६ ।।

क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ।। २.७.८७७ ।।

स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।। २.७.८७८ ।।

प्राघूर्णिकः प्राघूणकश्चाभ्युत्थानं तु गौरवम् ।। २.७.८७९ ।।

पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः ।। २.७.८८० ।।

वरिवस्या तु शुश्रूषा परिचर्याप्युपासना ।। २.७.८८१ ।।

व्रज्याटाट्या पर्यटनं चर्या त्वीर्यापथे स्थितिः ।। २.७.८८२ ।।

उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ।। २.७.८८३ ।।

प्राचेतसश्चाअदिकविः स्यान्मैत्रावरुणिश्च सः ।। २.७.८८४ ।।

वाल्मीकश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ।। २.७.८८५ ।।

व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः ।। २.७.८८६ ।।

आनुपूर्वी स्त्रियां वावृत्परिपाठी अनुक्रमः ।। २.७.८८७ ।।

पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः ।। २.७.८८८ ।।

नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ।। २.७.८८९ ।।

औपवस्तं तूपवासः विवेकः पृथगात्मता ।। २.७.८९० ।।

स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ।। २.७.८९१ ।।

पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः ।। २.७.८९२ ।।

ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ ।। २.७.८९३ ।।

मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ।। २.७.८९४ ।।

संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ।। २.७.८९५ ।।

समे तु पादग्रहणमभिवादनमित्युभे ।। २.७.८९६ ।।

भिक्षुः परिव्राट्कर्मन्दी पाराशर्यपि मस्करी ।। २.७.८९७ ।।

तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।। २.७.८९८ ।।

तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ।। २.७.८९९ ।।

ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती ।। २.७.९०० ।।

ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ।। २.७.९०१ ।।

यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।। २.७.९०२ ।।

स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ।। २.७.९०३ ।।

पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः ।। २.७.९०४ ।।

पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ।। २.७.९०५ ।।

अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं बृषी ।। २.७.९०६ ।।

अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम् ।। २.७.९०७ ।।

स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनं च सा ।। २.७.९०८ ।।

सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ।। २.७.९०९ ।।

दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ।। २.७.९१० ।।

शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ।। २.७.९११ ।।

नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ।। २.७.९१२ ।।

क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु ।। २.७.९१३ ।।

कक्षापटी च कौपीनं शाटी च स्त्रीति लक्ष्यतः ।। २.७.९१४ ।।

उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ।। २.७.९१५ ।।

प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ।। २.७.९१६ ।।

अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ।। २.७.९१७ ।।

मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ।। २.७.९१८ ।।

स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।। २.७.९१९ ।।

देवभूयादिकं तद्वत्क्.च्छ्रं सान्तपनादिकम् ।। २.७.९२० ।।

संन्यासवत्यनशने पुमान्प्रायोऽथ वीरहा ।। २.७.९२१ ।।

नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना ।। २.७.९२२ ।।

व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ।। २.७.९२३ ।।

धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ।। २.७.९२४ ।।

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।। २.७.९२५ ।।

अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।। २.७.९२६ ।।

परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।। २.७.९२७ ।।

परिवित्तिस्तु तज्जायान्विवाहोपयमौ समौ ।। २.७.९२८ ।।

तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ।। २.७.९२९ ।।

व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।। २.७.९३० ।।

त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।। २.७.९३१ ।।

सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धाः वरस्य ये ।। २.७.९३२ ।।

|| क्षत्रियवर्गः ||

मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् || २.८.९३३ ||

राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः || २.८.९३४ ||

राजा तु प्रणताशषसामन्तः स्यादधीश्वरः || २.८.९३५ ||

चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः || २.८.९३६ ||

येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः || २.८.९३७ ||

शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् || २.८.९३८ ||

राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् || २.८.९३९ ||

मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः || २.८.९४० ||

महामात्रा प्रधानानि पुरोधास्तु पुरोहितः || २.८.९४१ ||

द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ || २.८.९४२ ||

प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः || २.८.९४३ ||

रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ || २.८.९४४ ||

स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु || २.८.९४५ ||

भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः || २.८.९४६ ||

अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः || २.८.९४७ ||

सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते || २.८.९४८ ||

शण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः || २.८.९४९ ||

विषयानन्तरो राजा शत्रुर्मित्रमतः परम् || २.८.९५० ||

उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः || २.८.९५१ ||

रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ।। २.८.९५२ ।।

द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।। २.८.९५३ ।।

अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ।। २.८.९५४ ।।

वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् ।। २.८.९५५ ।।

सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ।। २.८.९५६ ।।

यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।। २.८.९५७ ।।

चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ।। २.८.९५८ ।।

सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।। २.८.९५९ ।।

स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ।। २.८.९६० ।।

तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ ।। २.८.९६१ ।।

लिपिकारोऽक्षरचरणोऽक्षरचुञ्चुश्च लेखके ।। २.८.९६२ ।।

लिखिताक्षरविन्यासे संस्थाने ।। २.८.९६३ ।।

स्यात्सन्देशहरो दूतो दूत्यं तद्भावकर्मणी ।। २.८.९६४ ।।

अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।। २.८.९६५ ।।

स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।। २.८.९६६ ।।

राज्याङ्गानि प्रकृतयः पौराणां श्रेनयोऽपि च ।। २.८.९६७ ।।

सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।। २.८.९६८ ।।

षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।। २.८.९६९ ।।

क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ।। २.८.९७० ।।

स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ।। २.८.९७१ ।।

भेदो दण्डः साम दानमित्युपायचतुष्टयम् ।। २.८.९७२ ।।

साहसं तु समो दमो ।। २.८.९७३ ।।

भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ।। २.८.९७४ ।।

पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ।। २.८.९७५ ।।

विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ।। २.८.९७६ ।।

रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु ।। २.८.९७७ ।।

समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् ।। २.८.९७८ ।।

अभ्रेषान्यायकल्पास्तु देशरूपं समञ्जसम् ।। २.८.९७९ ।।

युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ।। २.८.९८० ।।

न्याय्यं च त्रिषु षट्संप्रधारणा तु समर्थनम् ।। २.८.९८१ ।।

अववादस्तु निर्देशो निदेशः शासनं च सः ।। २.८.९८२ ।।

शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः ।। २.८.९८३ ।।

सुधरणा सुधारा स्त्री सुस्थितिः सुदशोन्नतिः ।। २.८.९८४ ।।

आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने ।। २.८.९८५ ।।

द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः ।। २.८.९८६ ।।

घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम् ।। २.८.९८७ ।।

उपायनमुपग्राह्यमुपहारस्तथोपदा ।। २.८.९८८ ।।

यौतकादि तु यद्देयं सुदायो हरणं च तत् ।। २.८.९८९ ।।

तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ।। २.८.९९० ।।

सान्दृष्टिकं फलं सद्यः उदर्कः फलमुत्तरम् ।। २.८.९९१ ।।

अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ।। २.८.९९२ ।।

महीभुजामहिभयं स्वपक्षप्रभवं भयम् ।। २.८.९९३ ।।

प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम् ।। २.८.९९४ ।।

नृपासनं यत्तद्भद्रासनं सिंहासनं तु तत् ।। २.८.९९५ ।।

हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् ।। २.८.९९६ ।।

भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका ।। २.८.९९७ ।।

निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम् ।। २.८.९९८ ।।

हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ।। २.८.९९९ ।।

दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।। २.८.१००० ।।

मतङ्गजो गजो नागः कुञ्जरो वारणः करी ।। २.८.१००१ ।।

इभः स्तम्बेरभः पद्मी यूथनाथस्तु यूथपः ।। २.८.१००२ ।।

मदोत्कटो मदकलः कलभः करिशावकः ।। २.८.१००३ ।।

प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ ।। २.८.१००४ ।।

हास्तिकं गजता वृन्दे करिणी धेनुका वशा ।। २.८.१००५ ।।

गण्डः कटो मदो दानं वमथुः करशीकरः ।। २.८.१००६ ।।

कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ।। २.८.१००७ ।।

अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम् ।। २.८.१००८ ।।

अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ।। २.८.१००९ ।।

अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् ।। २.८.१०१० ।।

आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम् ।। २.८.१०११ ।।

पार्श्वभागः पक्षभागो दन्तभागस्तु योऽग्रतः ।। २.८.१०१२ ।।

द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ।। २.८.१०१३ ।।

तोत्रं वेणुकमालानं बन्धस्तम्भेऽथ शृङ्खले ।। २.८.१०१४ ।।

अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम् ।। २.८.१०१५ ।।

दूष्या चूषा ।। २.८.१०१६ ।।

प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ।। २.८.१०१७ ।।

वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी ।। २.८.१०१८ ।।

घोटके वीति पीति ।। २.८.१०१९ ।।

वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।। २.८.१०२० ।।

आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ।। २.८.१०२१ ।।

वनायुजाः पारसीकाः काम्बोजाः बाह्लिका हयाः ।। २.८.१०२२ ।।

ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः ।। २.८.१०२३ ।।

पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः ।। २.८.१०२४ ।।

बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ।। २.८.१०२५ ।।

त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।। २.८.१०२६ ।।

कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ।। २.८.१०२७ ।।

निगालस्तु गलोद्देशो वृन्दे त्वश्वीयमाश्ववत् ।। २.८.१०२८ ।।

आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ।। २.८.१०२९ ।।

गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् ।। २.८.१०३० ।।

कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान् ।। २.८.१०३१ ।।

पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः ।। २.८.१०३२ ।।

त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ।। २.८.१०३३ ।।

याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।। २.८.१०३४ ।।

असौ पुष्परथश्चक्रयानं न समराय यत् ।। २.८.१०३५ ।।

कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।। २.८.१०३६ ।।

क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्री कम्बलिवाह्यकम् ।। २.८.१०३७ ।।

शिबिका याप्ययानं स्याद्दोला प्रेङ्खाअदिकाः स्त्रियाम् ।। २.८.१०३८ ।।

उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ।। २.८.१०३९ ।।

पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।। २.८.१०४० ।।

रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ।। २.८.१०४१ ।।

त्रिषु द्वैपादयो रथ्या रथकड्या रथव्रजे ।। २.८.१०४२ ।।

धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः ।। २.८.१०४३ ।।

चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान् ।। २.८.१०४४ ।।

पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ।। २.८.१०४५ ।।

रथगुप्तिर्वरूथो ना कूबरस्तु युगन्धरः ।। २.८.१०४६ ।।

अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगाद्युगः ।। २.८.१०४७ ।।

सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ।। २.८.१०४८ ।।

परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ।। २.८.१०४९ ।।

आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।। २.८.१०५० ।।

नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ।। २.८.१०५१ ।।

सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।। २.८.१०५२ ।।

रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ।। २.८.१०५३ ।।

भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ।। २.८.१०५४ ।।

सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ।। २.८.१०५५ ।।

बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।। २.८.१०५६ ।।

परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ।। २.८.१०५७ ।।

कञ्चुको वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः ।। २.८.१०५८ ।।

बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ।। २.८.१०५९ ।।

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ।। २.८.१०६० ।।

उरश्छदः कङ्कटको जागरः कवचोऽस्त्रियाम् ।। २.८.१०६१ ।।

आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।। २.८.१०६२ ।।

संनद्धो वर्मितः सज्जो दंशितो व्युढकङ्कटः ।। २.८.१०६३ ।।

त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे ।। २.८.१०६४ ।।

पदातिपत्तिपदगपादातिकपदातयः ।। २.८.१०६५ ।।

पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः ।। २.८.१०६६ ।।

शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ।। २.८.१०६७ ।।

कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।। २.८.१०६८ ।।

अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः ।। २.८.१०६९ ।।

धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।। २.८.१०७० ।।

स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ।। २.८.१०७१ ।।

याष्टीकपारश्वथिकौ यष्टिपर्श्वथहेतिकौ || २.८.१०७२ ||

नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ || २.८.१०७३ ||

चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः || २.८.१०७४ ||

अनुप्लवः सहायश्चानुचरोऽनुचरोऽभिचरः समाः || २.८.१०७५ ||

पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः || २.८.१०७६ ||

पुरोगमः पुरोगामी मन्दगामी तु मन्थरः || २.८.१०७७ ||

जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ || २.८.१०७८ ||

तरस्वी त्वरितो वेगी प्रजस्वी जवनो जवः || २.८.१०७९ ||

जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके || २.८.१०८० ||

जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति || २.८.१०८१ ||

सोऽभ्यमित्रोऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि || २.८.१०८२ ||

ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोऽतिशयान्वितः || २.८.१०८३ ||

स्वादुरस्वानुरसिलो रथिको रथिरो रथी || २.८.१०८४ ||

कामगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् || २.८.१०८५ ||

शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः || २.८.१०८६ ||

सांयुगीनो रणे साधुः शस्त्रजीवादयस्त्रिषु || २.८.१०८७ ||

ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः || २.८.१०८८ ||

वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् || २.८.१०८९ ||

व्यूहस्तु बलविन्यासो भेदादण्डादयो युधि || २.८.१०९० ||

प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः || २.८.१०९१ ||

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।। २.८.१०९२ ।।

पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।। २.८.१०९३ ।।

सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।। २.८.१०९४ ।।

अनीकिनी दशानीकिन्यक्षौहिण्यथ संपदि ।। २.८.१०९५ ।।

संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ ।। २.८.१०९६ ।।

आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ।। २.८.१०९७ ।।

धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।। २.८.१०९८ ।।

इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ।। २.८.१०९९ ।।

कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ ।। २.८.११०० ।।

कोटिरस्याटनी गोधातले ज्याघातवारणे ।। २.८.११०१ ।।

लस्तकस्तु धनुर्मध्यं मोर्वी ज्या शिञ्जिनी गुणः ।। २.८.११०२ ।।

स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ।। २.८.११०३ ।।

लक्ष्यं लक्षं शरव्यं च शराभ्यास उपासनम् ।। २.८.११०४ ।।

पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ।। २.८.११०५ ।।

कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।। २.८.११०६ ।।

प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ।। २.८.११०७ ।।

निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ।। २.८.११०८ ।।

तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ।। २.८.११०९ ।।

तूण्यां खद्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।। २.८.१११० ।।

कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ।। २.८.११११ ।।

त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ।। २.८.१११२ ।।

फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः ।। २.८.१११३ ।।

द्रुघणो मुद्गरघनौ स्यादीली करवालिका ।। २.८.१११४ ।।

भिन्दिपालः सृगस्तुल्यौ परिघः परिघातिनः ।। २.८.१११५ ।।

द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।। २.८.१११६ ।।

स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ।। २.८.१११७ ।।

वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम् ।। २.८.१११८ ।।

प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ।। २.८.१११९ ।।

सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ।। २.८.११२० ।।

लोहाभिसारोऽस्त्रभृतां राज्ञानां नीराजनाविधिः ।। २.८.११२१ ।।

यत्सेनयाभिगमनमरौ तदभिषेणनम् ।। २.८.११२२ ।।

यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ।। २.८.११२३ ।।

स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ।। २.८.११२४ ।।

अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ।। २.८.११२५ ।।

वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः ।। २.८.११२६ ।।

स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः ।। २.८.११२७ ।।

संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ।। २.८.११२८ ।।

रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ।। २.८.११२९ ।।

चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले ।। २.८.११३० ।।

पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ।। २.८.११३१ ।।

सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा ।। २.८.११३२ ।।

अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ।। २.८.११३३ ।।

आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ।। २.८.११३४ ।।

अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः ।। २.८.११३५ ।।

द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ।। २.८.११३६ ।।

शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ।। २.८.११३७ ।।

वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ।। २.८.११३८ ।।

युद्धमायोधनं जन्यं प्रघनं प्रविदारणम् ।। २.८.११३९ ।।

मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ।। २.८.११४० ।।

अस्त्रियां समरानीकरणाः कलहविग्रहौ ।। २.८.११४१ ।।

संप्रहाराभिसंपात कलिसंस्फोट संयुगाः ।। २.८.११४२ ।।

अभ्यामर्द समाघऽत संग्रामाभ्यागमाहवाः ।। २.८.११४३ ।।

समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ।। २.८.११४४ ।।

नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ।। २.८.११४५ ।।

क्ष्वेदा तु सिंहनादः स्यात्करिणां घटना घटा ।। २.८.११४६ ।।

क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ।। २.८.११४७ ।।

विस्फारो धनुषः स्वानः पताहादम्बरओ समौ ।। २.८.११४८ ।।

प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् ।। २.८.११४९ ।।

अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ।। २.८.११५० ।।

मूर्च्छा तु कश्मलं मोहो.आप्यवमर्दस्तु पीदनम् ।। २.८.११५१ ।।

अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ।। २.८.११५२ ।।

वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ।। २.८.११५३ ।।

प्रद्रावोद्द्रावसन्द्राव सन्दावा विद्रवो द्रवः ।। २.८.११५४ ।।

अपक्रमोऽपयानं च रणे भंगः पराजयः ।। २.८.११५५ ।।

पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ।। २.८.११५६ ।।

प्रमापणं निबर्हणं निकारणं विशारणम् ।। २.८.११५७ ।।

प्रवासनं परासनं निषूदनं निहिंसनम् ।। २.८.११५८ ।।

निर्वासनं संज्ञपनं निर्गन्थनमपासनम् ।। २.८.११५९ ।।

निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।। २.८.११६० ।।

निर्वापणं विशसनं मारणं प्रतिघातनम् ।। २.८.११६१ ।।

उद्वासनप्रमथनक्रथनोज्जासनानि च ।। २.८.११६२ ।।

आलम्भपिञ्जविशरघातोन्माथवधा अपि ।। २.८.११६३ ।।

स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।। २.८.११६४ ।।

अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।। २.८.११६५ ।।

परासुप्राप्तपंचत्वपरेतप्रेतसंस्थिताः ।। २.८.११६६ ।।

मृतप्रमीतौ त्रिष्वेते, चिता चित्या चितिः स्त्रियाम् ।। २.८.११६७ ।।

कबन्धोऽस्त्री क्रिया युक्तमपमूर्धकलेवरम् ।। २.८.११६८ ।।

श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ।। २.८.११६९ ।।

प्रग्रहोपग्रहौ बन्द्यां, कारा स्यात्बन्धनालये ।। २.८.११७० ।।

पूंसि भूम्न्यसवः प्राणाश्चैवं, जीवोऽसुधारणम् ।। २.८.११७१ ।।

आयुर्जीवितकालो, ना जीवतुर्जीवनौषधम् ।। २.८.११७२ ।।

।। वैश्यवर्गः । ।।

ऊरव्य ऊरुज अर्या वैश्या भूमिस्पृशो विशः ।। २.९.११७३ ।।

आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ।। २.९.११७४ ।।

स्त्रियां कृषिः पाशुपाल्यम् वाणिज्यं चेति वृत्तयः ।। २.९.११७५ ।।

सेवा श्ववृत्तिरनृतं कृशिरुञ्छशिलं त्वृतम् ।। २.९.११७६ ।।

द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ।। २.९.११७७ ।।

सत्यानृतं वणिग्भावः, स्यादृणं पर्युदञ्चनम् ।। २.९.११७८ ।।

उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।। २.९.११७९ ।।

याञ्चयाप्तं याचितकं निमयादापमित्यकम् ।। २.९.११८० ।।

उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।। २.९.११८१ ।।

कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ।। २.९.११८२ ।।

क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।। २.९.११८३ ।।

क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ।। २.९.११८४ ।।

यव्यं यवक्यं यष्टिक्यं यवादिभवनं हि यत् ।। २.९.११८५ ।।

तिल्यतैलीनवन्माषोमाणुभङ्गाद्विरूपता ।। २.९.११८६ ।।

मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।। २.९.११८७ ।।

शाकक्षेत्रादिके शाकशाकतं शाकशाकिनम् ।। २.९.११८८ ।।

बीजाकृतं तूप्रकृष्टे सीत्यं कृष्टं च हल्यवत् ।। २.९.११८९ ।।

त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।। २.९.११९० ।।

द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ।। २.९.११९१ ।।

द्रोणाढकादि वापादौ द्रौणिकाढकिकादयः ।। २.९.११९२ ।।

खरीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ।। २.९.११९३ ।।

पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ।। २.९.११९४ ।।

कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ।। २.९.११९५ ।।

लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः ।। २.९.११९६ ।।

प्राजनं तोदनं तोत्रं खनित्रमवदारणे ।। २.९.११९७ ।।

दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् ।। २.९.११९८ ।।

निरीषं कुटकं फालः कृषको लांगलं हलम् ।। २.९.११९९ ।।

गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः ।। २.९.१२०० ।।

ईष लांगलदंडः स्यात्सीत लाङ्गलपद्धतिः ।। २.९.१२०१ ।।

पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने ।। २.९.१२०२ ।।

आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौ समौ ।। २.९.१२०३ ।।

तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः ।। २.९.१२०४ ।।

हरेणुरेणुकौ चास्मिन्कोरदूषस्तु कोद्रवः ।। २.९.१२०५ ।।

मंगल्यको मसूरोऽथ मकुष्ठक मयुष्ठकौ ।। २.९.१२०६ ।।

वनमुद्गे सर्षपे तु द्वौ तंतुभकदम्बकौ ।। २.९.१२०७ ।।

सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ।। २.९.१२०८ ।।

स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ।। २.९.१२०९ ।।

द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।। २.९.१२१० ।।

क्षवः क्षुताभिजननो राजिका कृष्णिकासुरी ।। २.९.१२११ ।।

स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा ।। २.९.१२१२ ।।

मातुलानी तु भङ्गायां व्रीहि भेदस्त्वणुः पुमान् ।। २.९.१२१३ ।।

किंशारुः सस्यशूकं स्यात्कणिशं सस्यमञ्जरी ।। २.९.१२१४ ।।

धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ।। २.९.१२१५ ।।

नाडी नालं च काण्डोऽस्य पलालोस्त्री स निष्फलः ।। २.९.१२१६ ।।

कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् ।। २.९.१२१७ ।।

शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा त्रिषूत्तरे ।। २.९.१२१८ ।।

ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ।। २.९.१२१९ ।।

माषादयः शमीधान्ये शूकधान्ये यवादयः ।। २.९.१२२० ।।

शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ।। २.९.१२२१ ।।

तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ।। २.९.१२२२ ।।

अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ।। २.९.१२२३ ।।

प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ।। २.९.१२२४ ।।

स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ ।। २.९.१२२५ ।।

समानौ रसवत्यां तु पाकस्थानमहानसे ।। २.९.१२२६ ।।

पौरोगवस्तदध्यक्षः सूपकारास्तु बल्लवाः ।। २.९.१२२७ ।।

आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।। २.९.१२२८ ।।

आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ।। २.९.१२२९ ।।

अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।। २.९.१२३० ।।

अङ्गारधानिकाङ्गागरशकट्यपि हसन्त्यपि ।। २.९.१२३१ ।।

हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम् ।। २.९.१२३२ ।।

क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ।। २.९.१२३३ ।।

अलिञ्जरः स्यान्मणिकं कर्कर्य्यालुर्गलन्तिका ।। २.९.१२३४ ।।

पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः ।। २.९.१२३५ ।।

घटः कुटनिपावस्त्री शरावो वर्धमानकः ।। २.९.१२३६ ।।

ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ।। २.९.१२३७ ।।

कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ।। २.९.१२३८ ।।

सर्वमावपनं भाण्डं पात्रामत्रे च भाजनम् ।। २.९.१२३९ ।।

दर्विः कम्बिः खजाका च स्यात्तद्दूर्दारुहस्तकः ।। २.९.१२४० ।।

अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ।। २.९.१२४१ ।।

कलम्बश्च कदम्बश्च वेषवार उपस्करः ।। २.९.१२४२ ।।

तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ।। २.९.१२४३ ।।

मरीचं कोलकं कृष्णभूषणं धर्मपत्तनम् ।। २.९.१२४४ ।।

जीरको जरणोऽजाजि कणाः कृष्णे तु जीरके ।। २.९.१२४५ ।।

सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्जिका ।। २.९.१२४६ ।।

आर्द्रकं शृङ्गबेरं स्यादथ छत्रा वितुन्नकम् ।। २.९.१२४७ ।।

कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम् ।। २.९.१२४८ ।।

स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ।। २.९.१२४९ ।।

आरनालकसौवीरकुल्माषऽभिशुतानि च ।। २.९.१२५० ।।

अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ।। २.९.१२५१ ।।

सहस्रवेधि जतुकं बल्हीकं हिङ्गु रामठम् ।। २.९.१२५२ ।।

तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ।। २.९.१२५३ ।।

निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।। २.९.१२५४ ।।

सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ।। २.९.१२५५ ।।

सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ।। २.९.१२५६ ।।

रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ।। २.९.१२५७ ।।

सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके ।। २.९.१२५८ ।।

मत्स्यन्डी फाणितं खण्डविकारे शर्करा सिता ।। २.९.१२५९ ।।

कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता ।। २.९.१२६० ।।

स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः ।। २.९.१२६१ ।।

शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम् ।। २.९.१२६२ ।।

प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ।। २.९.१२६३ ।।

स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे ।। २.९.१२६४ ।।

चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ।। २.९.१२६५ ।।

आपक्वं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः ।। २.९.१२६६ ।।

पृथकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः ।। २.९.१२६७ ।।

पूपोऽपूपः पिष्टकः स्यात्करम्भो दधिसक्तवः ।। २.९.१२६८ ।।

भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ।। २.९.१२६९ ।।

भिस्सटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम् ।। २.९.१२७० ।।

मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ।। २.९.१२७१ ।।

यवागूरुष्णिका श्राणा विलेपी तरला च सा ।। २.९.१२७२ ।।

म्रक्षणाभ्यञ्जने तैलं कृसरस्तु तिलौदनः ।। २.९.१२७३ ।।

गव्यं त्रिषु गवां सर्वं गोविड्गोमयस्त्रियाम् ।। २.९.१२७४ ।।

तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयस्समम् ।। २.९.१२७५ ।।

पयस्यमाज्यदध्यादि त्रप्स्यं दधि धनेतरत् ।। २.९.१२७६ ।।

घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्घृतम् ।। २.९.१२७७ ।।

तत्तु हैयङ्गवीनं यत्ह्योघोदोहोद्भवं गृतम् ।। २.९.१२७८ ।।

दन्डाहतं कालशेयमरिष्टमपि गोरसः ।। २.९.१२७९ ।।

तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ।। २.९.१२८० ।।

मन्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ।। २.९.१२८१ ।।

अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलः पुमान् ।। २.९.१२८२ ।।

सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ।। २.९.१२८३ ।।

उदन्या तु पिपासा तृट्तर्पो जग्धिस्तु भोजनम् ।। २.९.१२८४ ।।

जेमनं लेह आहारो निघासो न्याद इत्यपि ।। २.९.१२८५ ।।

सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ।। २.९.१२८६ ।।

कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।। २.९.१२८७ ।।

गोपे गोपाल गोसंख्य गोधुगाभीर वल्लवाः ।। २.९.१२८८ ।।

गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे ।। २.९.१२८९ ।।

गोमान्गोमी गोकुलं तु गोधनं स्यात्गवां व्रजे ।। २.९.१२९० ।।

त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा ।। २.९.१२९१ ।।

उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ।। २.९.१२९२ ।।

अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ।। २.९.१२९३ ।।

गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ।। २.९.१२९४ ।।

उक्षा महान्महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः ।। २.९.१२९५ ।।

उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः ।। २.९.१२९६ ।।

शकृत्करिस्तु वत्सस्याद्दम्यवत्सतरौ समौ ।। २.९.१२९७ ।।

आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः ।। २.९.१२९८ ।।

स्कन्धदेशे स्वस्य वहः सास्ना तु गलकम्बलः ।। २.९.१२९९ ।।

स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड्युगपार्श्वगः ।। २.९.१३०० ।।

युगादीनां तु वोढारो युग्यप्रासंग्यशाकटाः ।। २.९.१३०१ ।।

खनति तेन तद्वोढास्येदं हालिकसैरिकौ ।। २.९.१३०२ ।।

धुर्वहे धुर्य धौरेय धुरीणाः सधुरन्धराः ।। २.९.१३०३ ।।

उभावेकधुरीणैकधुरावेकधुरावहे ।। २.९.१३०४ ।।

स तु सर्वधुरीणः स्याद्यो वै सर्वधुरावहः ।। २.९.१३०५ ।।

माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ।। २.९.१३०६ ।।

अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नौचिकी ।। २.९.१३०७ ।।

वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ।। २.९.१३०८ ।।

द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।। २.९.१३०९ ।।

चतुरब्दा चतुर्हाण्येवं त्र्यब्दा त्रिहायणी ।। २.९.१३१० ।।

वशा वन्ध्यावतोका तु स्रवद्गर्भाथ सन्धिनी ।। २.९.१३११ ।।

आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी ।। २.९.१३१२ ।।

काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी ।। २.९.१३१३ ।।

स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ।। २.९.१३१४ ।।

चिरप्रसूता बष्कयणी धेनुः स्यात्नवसूतिका ।। २.९.१३१५ ।।

सुव्रता सुखसन्दोह्या पीनोध्नी पीवरस्तनी ।। २.९.१३१६ ।।

द्रोणक्षीरा द्रोणदुग्धा धेनुष्या बन्धके स्थिता ।। २.९.१३१७ ।।

समांसमीना सा यैव प्रतिवर्षप्रसूतये ।। २.९.१३१८ ।।

ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ।। २.९.१३१९ ।।

न पुम्सि दाम सन्दानं पशुरज्जुस्तु दामनी ।। २.९.१३२० ।।

वैशाखमन्थमन्थान मन्थानो मन्थदन्डके ।। २.९.१३२१ ।।

कुठरो दन्डविष्कम्भो मन्थनी गर्गरी समे ।। २.९.१३२२ ।।

उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः ।। २.९.१३२३ ।।

करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ।। २.९.१३२४ ।।

अजा च्छागी शुभच्छागबस्तच्छगलका अजे ।। २.९.१३२५ ।।

मेढ्रोरभ्रोरणोर्णायु मेष वृष्णय एडके ।। २.९.१३२६ ।।

उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।। २.९.१३२७ ।।

चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ।। २.९.१३२८ ।।

वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।। २.९.१३२९ ।।

पण्याजीवो हयापणिकः क्रयविक्रयिकश्च सः ।। २.९.१३३० ।।

विक्रेता स्याद्विक्रयिकः क्रायिकक्रयिकौ समौ ।। २.९.१३३१ ।।

वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ।। २.९.१३३२ ।।

नीवी परिपणो मूलधनं लाभोऽधिकं फलम् ।। २.९.१३३३ ।।

परिदानं परीवर्तो नैमेयनियमावपि ।। २.९.१३३४ ।।

पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् ।। २.९.१३३५ ।।

क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ।। २.९.१३३६ ।।

विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ।। २.९.१३३७ ।।

क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ।। २.९.१३३८ ।।

विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ।। २.९.१३३९ ।।

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ।। २.९.१३४० ।।

संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः ।। २.९.१३४१ ।।

पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ।। २.९.१३४२ ।।

यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।। २.९.१३४३ ।।

मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्जाद्यमाषकः ।। २.९.१३४४ ।।

ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।। २.९.१३४५ ।।

सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ।। २.९.१३४६ ।।

तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।। २.९.१३४७ ।।

आचितो दश भाराः स्युः शाकटो भार आचितः ।। २.९.१३४८ ।।

कार्षापणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः ।। २.९.१३४९ ।।

अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ।। २.९.१३५० ।।

कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।। २.९.१३५१ ।।

पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके ।। २.९.१३५२ ।।

द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।। २.९.१३५३ ।।

हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ।। २.९.१३५४ ।।

स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ।। २.९.१३५५ ।।

ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् ।। २.९.१३५६ ।।

गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।। २.९.१३५७ ।।

शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ।। २.९.१३५८ ।।

मुक्ताथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम् ।। २.९.१३५९ ।।

रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ।। २.९.१३६० ।।

स्वर्णं सुवर्णं कनकं हिरण्यं हेमकाटकम् ।। २.९.१३६१ ।।

तपनीयं शातकुम्भं गाङ्गेयम् भर्म कर्वुरम् ।। २.९.१३६२ ।।

चामीकरं जातरूपं महारजतकाञ्चने ।। २.९.१३६३ ।।

रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ।। २.९.१३६४ ।।

अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः ।। २.९.१३६५ ।।

दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ।। २.९.१३६६ ।।

रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ।। २.९.१३६७ ।।

शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्टोदुम्बराणि च ।। २.९.१३६८ ।।

लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिन्डं कालायसायसी ।। २.९.१३६९ ।।

अश्मसारोऽथ मण्डूरं सिंहाणमपि तन्मले ।। २.९.१३७० ।।

सर्वं च तैजसं लौहं विकारस्त्वयसः कुशी ।। २.९.१३७१ ।।

क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ।। २.९.१३७२ ।।

गवलं माहिषं शृङ्गमभ्रकं गिरिजामले ।। २.९.१३७३ ।।

स्रोतोञ्जनं तु मौवीरं कापोताञ्जनयामुने ।। २.९.१३७४ ।।

तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ।। २.९.१३७५ ।।

कर्परी दार्विकाक्कातोद्भवं तुत्थं रसाञ्जनम् ।। २.९.१३७६ ।।

रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः ।। २.९.१३७७ ।।

सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका ।। २.९.१३७८ ।।

रीतिपुष्पं पुष्पके तु पुष्पकं कुसुमाञ्जनम् ।। २.९.१३७९ ।।

पिञ्जरं पीतनं तालमालं च हरितालके ।। २.९.१३८० ।।

गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ।। २.९.१३८१ ।।

वोलगन्धरसप्राणपिण्डगोपरसाः समाः ।। २.९.१३८२ ।।

डिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् ।। २.९.१३८३ ।।

नागसीसकयोगेष्टवप्राणि त्रिषु पिञ्चटम् ।। २.९.१३८४ ।।

रङ्गवङ्गे अथ पिचुस्तूलोऽथ कमलोत्तरम् ।। २.९.१३८५ ।।

स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ।। २.९.१३८६ ।।

मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि ।। २.९.१३८७ ।।

मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ।। २.९.१३८८ ।।

मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।। २.९.१३८९ ।।

नैपाली कुनटी गोला यवक्षारो यवाग्रजः ।। २.९.१३९० ।।

पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः ।। २.९.१३९१ ।।

सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना ।। २.९.१३९२ ।।

शिग्रुजं श्वेतमारिचं मोरटं मूलमैक्षवम् ।। २.९.१३९३ ।।

ग्रन्थिकं पिप्पलीमूलं चटिकाशिर इत्यपि ।। २.९.१३९४ ।।

गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम् ।। २.९.१३९५ ।।

त्रिकटु त्र्यूपणं व्योपं त्रिफला तु फलत्रिकम् ।। २.९.१३९६ ।।

।। । इति वैश्यवर्गः ९, अत्र मूलश्लोकाः १११ ।।

।। शूद्रवर्गः । ।।

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः । ।। २.१०.१३९७ ।।

आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ।। २.१०.१३९८ ।।

शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ।। २.१०.१३९९ ।।

शूद्राक्षत्रिययोरुग्रो मागधःक्षत्रियाविशोः ।। २.१०.१४०० ।।

माहिषोऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः ।। २.१०.१४०१ ।।

ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः ।। २.१०.१४०२ ।।

रथकारस्तु माहिष्यात्करण्यां यस्य संभवः ।। २.१०.१४०३ ।।

स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ।। २.१०.१४०४ ।।

कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।। २.१०.१४०५ ।।

कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः ।। २.१०.१४०६ ।।

कुम्भकारः कुलालः स्यात्पलगण्डस्तु लेपकः ।। २.१०.१४०७ ।।

तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः ।। २.१०.१४०८ ।।

रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसि धावकः ।। २.१०.१४०९ ।।

पादकृच्चर्मकारः स्याद्व्योकारो लोहकारकः ।। २.१०.१४१० ।।

नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ।। २.१०.१४११ ।।

स्याच्छाङ्खिकः काम्बविकः शौल्बिकस्ताम्रकुट्टकः ।। २.१०.१४१२ ।।

तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।। २.१०.१४१३ ।।

ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ।। २.१०.१४१४ ।।

क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः ।। २.१०.१४१५ ।।

निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः ।। २.१०.१४१६ ।।

जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ।। २.१०.१४१७ ।।

स्यान्माया शाम्बरी मायाकारस्तु प्रतिहारकः ।। २.१०.१४१८ ।।

शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।। २.१०.१४१९ ।।

भरता इत्यपि नटाश्चारणास्तु कुशीलवाः ।। २.१०.१४२० ।।

मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः ।। २.१०.१४२१ ।।

वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ।। २.१०.१४२२ ।।

जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ ।। २.१०.१४२३ ।।

वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ।। २.१०.१४२४ ।।

भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः ।। २.१०.१४२५ ।।

वार्तावहो वैवधिको भारवाहस्तु भारिकः ।। २.१०.१४२६ ।।

विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।। २.१०.१४२७ ।।

निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ।। २.१०.१४२८ ।।

भृत्ये दासेरदासेयदासगोप्यकचेटकाः ।। २.१०.१४२९ ।।

नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः ।। २.१०.१४३० ।।

पराचितपरिस्कन्दपरजातपरैधिताः ।। २.१०.१४३१ ।।

मान्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः ।। २.१०.१४३२ ।।

दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ।। २.१०.१४३३ ।।

चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ।। २.१०.१४३४ ।।

निपादश्वपचावन्तेवासिचाण्डालपुक्कसाः ।। २.१०.१४३५ ।।

भेदाः । किरातशबरपुलिन्दा म्लेच्छजातयः ।। २.१०.१४३६ ।।

व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।। २.१०.१४३७ ।।

कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ।। २.१०.१४३८ ।।

शुनको भपकः श्वा स्यादलर्कस्तु स योगितः ।। २.१०.१४३९ ।।

श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ।। २.१०.१४४० ।।

विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः ।। २.१०.१४४१ ।।

आच्छोदनं मृगव्यं स्यादाखेटोमृगया स्त्रियाम् ।। २.१०.१४४२ ।।

दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः ।। २.१०.१४४३ ।।

चौरैकागारिकस्तेनदस्युतस्करमोपकाः ।। २.१०.१४४४ ।।

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।। २.१०.१४४५ ।।

चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने ।। २.१०.१४४६ ।।

वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ।। २.१०.१४४७ ।।

उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी ।। २.१०.१४४८ ।।

शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः ।। २.१०.१४४९ ।।

उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ।। २.१०.१४५० ।।

पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः ।। २.१०.१४५१ ।।

वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि ।। २.१०.१४५२ ।।

पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता ।। २.१०.१४५३ ।।

जतुत्रपुविकारे तु जातुपं त्रापुषं त्रिषु ।। २.१०.१४५४ ।।

पिटकः पेटकः पेटामञ्जूषाथ विहङ्गिका ।। २.१०.१४५५ ।।

भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका ।। २.१०.१४५६ ।।

पादूरुपानत्स्त्री सैवानुपदीना पदायता ।। २.१०.१४५७ ।।

नद्ध्नी वर्ध्नी वरत्रा स्यादश्वादेस्ताडनी कशा ।। २.१०.१४५८ ।।

चाण्डालिका तु कण्डोल वीणा चण्डालवल्लकी ।। २.१०.१४५९ ।।

नाराची स्यादेषणिका शाणस्तु निकषः कषः ।। २.१०.१४६० ।।

व्रश्चनःपत्रपरशुरीपिका तूलिका समे ।। २.१०.१४६१ ।।

तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ।। २.१०.१४६२ ।।

आस्फोटनी वेधनिका कृपाणी कर्तरी समे ।। २.१०.१४६३ ।।

वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः ।। २.१०.१४६४ ।।

क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेधिका ।। २.१०.१४६५ ।।

सूर्मी स्थूणायःप्रतिमा शिल्पं कर्म कलादिकम् ।। २.१०.१४६६ ।।

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।। २.१०.१४६७ ।।

प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ।। २.१०.१४६८ ।।

वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।। २.१०.१४६९ ।।

साधारणः समानश्च स्युरुत्तरपदे त्वमी ।। २.१०.१४७० ।।

निभसंकाशनीकाशप्रतीकाशोपमादयः ।। २.१०.१४७१ ।।

कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ।। २.१०.१४७२ ।।

भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।। २.१०.१४७३ ।।

सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ।। २.१०.१४७४ ।।

गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता ।। २.१०.१४७५ ।।

मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् ।। २.१०.१४७६ ।।

शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ।। २.१०.१४७७ ।।

मध्वासवो माधवको मधु माध्वीकमद्वयोः ।। २.१०.१४७८ ।।

मैरेयमासवः सीधुर्मन्दको जगलः समौ ।। २.१०.१४७९ ।।

सन्धानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ।। २.१०.१४८० ।।

कारोत्तरः सुरामण्ड आपानं पानघोष्ठिका ।। २.१०.१४८१ ।।

चपकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् ।। २.१०.१४८२ ।।

धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ।। २.१०.१४८३ ।।

स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ।। २.१०.१४८४ ।।

द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ।। २.१०.१४८५ ।।

पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते ।। २.१०.१४८६ ।।

परिणायस्तु शारीणां समन्तात्नयनेऽस्त्रियाम् ।। २.१०.१४८७ ।।

अष्टापदं शारिफलं प्राणिवृत्तं समाह्वयः ।। २.१०.१४८८ ।।

उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ।। २.१०.१४८९ ।।

ताद्धर्म्यादन्यतो वृत्तावूत्द्या लिङ्गान्तरेऽपि ते ।। २.१०.१४९० ।।

।। । इति शूद्रवर्गः १० अत्र मूलश्लोकाः ४६ । । क्षे । । ।।

इत्यमरसिंहकृतौ नामलिङ्गानुशासने द्वितीयः काण्डो ।। २.१०.१४९१ ।।

भूम्यादिःसाङ्ग एव समर्थितः । अत्र मूलश्लोकाः ७३५ ।। २.१०.१४९२ ।।

सर्वे च मिलित्वा ७५० प्र का मू श्लो २८१ । क्षे श्लो १८ सर्वे मि २९९ । ।। २.१०.१४९३ ।।

एवं मू श्लो १०१७ क्षे श्लो ३२ सर्वे मि १०४९ ।। २.१०.१४९४ ।।

।। **विशेष्यनिघ्नवर्गः** । ।।

विशेष्य निघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ।। ३.०.१ ।।

लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ।। ३.०.२ ।।

।। परिभाषा । ।।

स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।। ३.०.३ ।।

गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ।। ३.०.४ ।।

विशेष्यनिघ्नवर्गः ।। ३.१.५ ।।

क्षेमङ्करोऽरिष्टतातिश्शिवतातिश्शिवङ्करः ।। ३.१.६ ।।

सुकृती पुण्यवान्धन्यो महेच्छस्तु महाशयः ।। ३.१.७ ।।

हृदयालुः सुहृदयो महोत्साहो महोद्यमः ।। ३.१.८ ।।

प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।। ३.१.९ ।।

वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ।। ३.१.१० ।।

पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः ।। ३.१.११ ।।

दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ।। ३.१.१२ ।।

स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ।। ३.१.१३ ।।

जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् ।। ३.१.१४ ।।

परीक्षकः कारणिको वरदस्तु समर्द्धकः ।। ३.१.१५ ।।

हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ।। ३.१.१६ ।।

दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः ।। ३.१.१७ ।।

दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ।। ३.१.१८ ।।

तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः ।। ३.१.१९ ।।

प्रतीते प्रथितख्यातवित्त विज्ञातविश्रुताः ।। ३.१.२० ।।

गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।। ३.१.२१ ।।

इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता ।। ३.१.२२ ।।

अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।। ३.१.२३ ।।

अधिकर्धिः समृद्धः स्यात्कुटुम्बव्यापृतस्तु यः ।। ३.१.२४ ।।

स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।। ३.१.२५ ।।

वराङ्गरूपोपेतो यस्सिंहसंहननो हि सः ।। ३.१.२६ ।।

निर्वार्यः कार्यकर्ता यः संपन्नः सत्वसंपदा ।। ३.१.२७ ।।

अवाचि मूकोऽथ मनोजवसः पितृसंनिभः ।। ३.१.२८ ।।

सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ।। ३.१.२९ ।।

लक्ष्मीवान्लक्ष्मणः श्रीलः श्रीमान्स्निग्धस्तु वत्सलः ।। ३.१.३० ।।

स्याद्दयालुः कारुणिकः कृपालुः सूरतस्समाः ।। ३.१.३१ ।।

स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ।। ३.१.३२ ।।

परतन्त्रः पराधीनः परवान्नाथवानपि ।। ३.१.३३ ।।

अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ।। ३.१.३४ ।।

खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः ।। ३.१.३५ ।।

जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः ।। ३.१.३६ ।।

कर्मक्षमोऽलङ्कर्माणः क्रियावान्कर्मसूद्यतः ।। ३.१.३७ ।।

स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ।। ३.१.३८ ।।

भरण्यभुक्कर्मकरः कर्मकारस्तु तत्क्रियः ।। ३.१.३९ ।।

अपस्नातो मृतस्नात आमिषशी तु शौष्कुलः ।। ३.१.४० ।।

बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ।। ३.१.४१ ।।

परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः ।। ३.१.४२ ।।

आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।। ३.१.४३ ।।

उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ।। ३.१.४४ ।।

सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः ।। ३.१.४५ ।।

लुब्धोऽभिलापुकस्तृष्णक्समौ लोलुपलोलुभौ ।। ३.१.४६ ।।

सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः ।। ३.१.४७ ।।

मत्ते शौण्डोत्कटक्षीबाः कामुके कमितानुकः ।। ३.१.४८ ।।

कम्रः कामयिताभीकः कमनः कामनोऽभिकः ।। ३.१.४९ ।।

विधेयो विनयग्राही वचनेस्थित आश्रवः ।। ३.१.५० ।।

वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः ।। ३.१.५१ ।।

धृष्टे धृष्णग्वियातश्च प्रगल्भः प्रतिभान्विते ।। ३.१.५२ ।।

स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते ।। ३.१.५३ ।।

अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः ।। ३.१.५४ ।।

आशंसुराशंसितरि गृहयालुर्ग्रहीतरि ।। ३.१.५५ ।।

श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके ।। ३.१.५६ ।।

लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके ।। ३.१.५७ ।।

शरारुर्घातुको हिंस्रः स्याद्वर्द्धिष्णुस्तु वर्द्धनः ।। ३.१.५८ ।।

उत्पतिष्णुस्तूत्पतितालङ्करिष्णुस्तु मण्डनः ।। ३.१.५९ ।।

भूष्णुर्श्वविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ ।। ३.१.६० ।।

निराकरिष्णुः क्षिप्नुः स्यात्सान्द्रस्निग्धस्तु मेदुरः ।। ३.१.६१ ।।

ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वरः ।। ३.१.६२ ।।

विसृत्वरो विसृमरः प्रसारी च विसारिणि ।। ३.१.६३ ।।

सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ।। ३.१.६४ ।।

क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः ।। ३.१.६५ ।।

जागरूको जागरिता घूर्णितः प्रचलायितः ।। ३.१.६६ ।।

स्वप्नक्शयालुर्निद्रालुर्निद्राणशयितौ समौ ।। ३.१.६७ ।।

पराङ्मुखः पराचीनः स्यादवाङ्प्यधोमुखः ।। ३.१.६८ ।।

देवानञ्चति देवद्र्यङ्विश्वद्र्यङ्विश्वगञ्चति ।। ३.१.६९ ।।

यस्सहाञ्चति सध्र्यङ्स स तिर्यङ्यस्तिरोऽञ्चति ।। ३.१.७० ।।

वदो वदावदो वक्ता वागीशो वाक्पतिस्समौ ।। ३.१.७१ ।।

वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ।। ३.१.७२ ।।

स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।। ३.१.७३ ।।

दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियम्वदे || ३.१.७४ ||

लोहलः स्यादस्फुटवाग्गर्ह्यवादी तु कद्वदः || ३.१.७५ ||

समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः || ३.१.७६ ||

रवणः शब्दनो नान्दीवादी नान्दीकरः समौ || ३.१.७७ ||

जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते || ३.१.७८ ||

तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरे || ३.१.७९ ||

निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः || ३.१.८० ||

आत्तगर्वोऽभिभूतः स्याद्दापितः साधितः समौ || ३.१.८१ ||

प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः || ३.१.८२ ||

निकृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः || ३.१.८३ ||

मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः || ३.१.८४ ||

अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ || ३.१.८५ ||

आपन्न आपत्प्राप्तः स्यात्कान्दिशीको भयद्रुतः || ३.१.८६ ||

आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे || ३.१.८७ ||

व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ || ३.१.८८ ||

विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः || ३.१.८९ ||

कश्यः कश्यार्हे सन्नद्धे त्वाततायी वधोद्यते || ३.१.९० ||

द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ || ३.१.९१ ||

विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः || ३.१.९२ ||

शिश्विदानोऽकृष्णकर्मा चपलश्चिकुरः समौ || ३.१.९३ ||

दोषैकदृक्पुरोभागी निकृतस्त्वनृजुः शठः || ३.१.९४ ||

कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः || ३.१.९५ ||

नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः || ३.१.९६ ||

अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः || ३.१.९७ ||

कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः || ३.१.९८ ||

निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।। ३.१.९९ ।।

वनीयको याचनको मार्गणो याचकार्थिनौ ।। ३.१.१०० ।।

अहङ्कारवानहंयुः शुभंयुस्तु शुभान्वितः ।। ३.१.१०१ ।।

दिव्योपपादुका देवा नृगवाद्या जरायुजाः ।। ३.१.१०२ ।।

स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । ।। ३.१.१०३ ।।

।। इति प्राणिवर्गः अत्र मूलश्लोकाः ५० । । ।।

उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ।। ३.१.१०४ ।।

सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।। ३.१.१०५ ।।

कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ।। ३.१.१०६ ।।

रम्यं मनोहरं सौम्यं भद्रकं रमणीयकम् ।। ३.१.१०७ ।।

तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।। ३.१.१०८ ।।

अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ।। ३.१.१०९ ।।

निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।। ३.१.११० ।।

कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ।। ३.१.१११ ।।

मलीमसं तु मलिनं कच्चरं मलदूषितम् ।। ३.१.११२ ।।

पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम् ।। ३.१.११३ ।।

निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।। ३.१.११४ ।।

असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके ।। ३.१.११५ ।।

क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।। ३.१.११६ ।।

मुख्यवर्यवरेण्याश्च प्रवर्होऽनवराध्र्यवत् ।। ३.१.११७ ।।

पराध्र्याग्रप्राग्रहरप्राग्रयाग्रयाग्रीयमग्रियम् ।। ३.१.११८ ।।

श्रेयान्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ।। ३.१.११९ ।।

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।। ३.१.१२० ।।

सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।। ३.१.१२१ ।।

अप्राग्रयं द्वयहीने द्वे अप्रधानोपसर्जने ।। ३.१.१२२ ।।

विशंकटं पृथु बृहद्विशालं पृथुलं महत् ।। ३.१.१२३ ।।

वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे ।। ३.१.१२४ ।।

स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ।। ३.१.१२५ ।।

स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ।। ३.१.१२६ ।।

अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ।। ३.१.१२७ ।।

प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।। ३.१.१२८ ।।

पुरुहूः पुरु भूयिष्ठं स्फारं भूयश च भूरि च ।। ३.१.१२९ ।।

परः शताद्यास्ते येषां परा संख्या शतादिकात् ।। ३.१.१३० ।।

गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम् ।। ३.१.१३१ ।।

विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ।। ३.१.१३२ ।।

समग्रं सकलं पूर्णमखण्डं स्यादनूनके ।। ३.१.१३३ ।।

घनं निरन्तरं सान्द्रं पेलवं विरलं तनु ।। ३.१.१३४ ।।

समीपे निकटासन्नसंनिकृष्टसनीडवत् ।। ३.१.१३५ ।।

सदेशाभ्याशसविधसमर्यादसवेशवत् ।। ३.१.१३६ ।।

उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ।। ३.१.१३७ ।।

संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।। ३.१.१३८ ।।

नेदिष्ठमन्तिकतमं स्याद्दूरं विप्रकृष्टकम् ।। ३.१.१३९ ।।

दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम् ।। ३.१.१४० ।।

वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् ।। ३.१.१४१ ।।

उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने ।। ३.१.१४२ ।।

न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानतम् ।। ३.१.१४३ ।।

अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।। ३.१.१४४ ।।

आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ।। ३.१.१४५ ।।

ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ ।। ३.१.१४६ ।।

शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ।। ३.१.१४७ ।।

स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः ।। ३.१.१४८ ।।

कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः ।। ३.१.१४९ ।।

चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ।। ३.१.१५० ।।

चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ।। ३.१.१५१ ।।

चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।। ३.१.१५२ ।।

अतिरिक्तः समधिको धृढसन्धिस्तु संहतः ।। ३.१.१५३ ।।

खक्खटं कठिनं क्रूरं कठोरं निष्ठुरं धृढम् ।। ३.१.१५४ ।।

जरठं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् ।। ३.१.१५५ ।।

पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः ।। ३.१.१५६ ।।

प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ।। ३.१.१५७ ।।

नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु ।। ३.१.१५८ ।।

अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ।। ३.१.१५९ ।।

प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ।। ३.१.१६० ।।

एकतानोऽनन्यवृत्तिरैकाग्रैकायनावपि ।। ३.१.१६१ ।।

अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः ।। ३.१.१६२ ।।

पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ।। ३.१.१६३ ।।

अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः ।। ३.१.१६४ ।।

मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ।। ३.१.१६५ ।।

साधारणं तु सामान्यमेकाकी त्वेक एककः ।। ३.१.१६६ ।।

भिन्नार्थका अन्यतर एकं त्वोऽन्येतरावपि ।। ३.१.१६७ ।।

उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् ।। ३.१.१६८ ।।

अरुन्तुदस्तु मर्मस्पृगबाधं तु निरर्गलम् ।। ३.१.१६९ ।।

प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।। ३.१.१७० ।।

वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणम् ।। ३.१.१७१ ।।

सङ्कटं ना तु संबाधः कलिलं गहनं समे ।। ३.१.१७२ ।।

संकीर्णे संकुलाकीर्णे मुण्डितं परिवापितम् ।। ३.१.१७३ ।।

ग्रन्थितं सन्दितं दृब्धं विसृतं विस्तृतं ततम् ।। ३.१.१७४ ।।

अन्तर्गतं विस्मृतं स्यात्प्रऽप्तप्रणिहिते समे ।। ३.१.१७५ ।।

वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।। ३.१.१७६ ।।

नुत्तनुन्नास्तनिष्ठयूताविद्धक्षिप्तेरिताः समाः ।। ३.१.१७७ ।।

परिक्षिप्तं तु निवृत्तं मूषितं मुषितार्थकम् ।। ३.१.१७८ ।।

प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते ।। ३.१.१७९ ।।

निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते ।। ३.१.१८० ।।

द्रुतावदीर्णे उद्गूर्णोद्यते काचितशिक्यिते ।। ३.१.१८१ ।।

घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे ।। ३.१.१८२ ।।

वेष्टितम् स्याद्वलयितं संवीतं रुद्धमावृतम् ।। ३.१.१८३ ।।

रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानितेजिते ।। ३.१.१८४ ।।

स्याद्विनाशोन्मुखं पक्वम् ह्रीणह्रीतौ तु लज्जिते ।। ३.१.१८५ ।।

वृत्ते तु वृतव्यावृत्तौ संयोजित उपाहितः ।। ३.१.१८६ ।।

प्राप्यं गम्यं समासाद्यम् स्यन्नं रीणं स्नुतं स्रुतम् ।। ३.१.१८७ ।।

संगूढः स्यात्संकलितोऽवगीतः ख्यातगर्हणः ।। ३.१.१८८ ।।

विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ।। ३.१.१८९ ।।

अवरीणो धिक्कृतश्चाप्यवध्वस्तोऽवचूर्णितः ।। ३.१.१९० ।।

अनायासकृतं फाण्टं स्वनितं ध्वनितं समे ।। ३.१.१९१ ।।

बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम् ।। ३.१.१९२ ।।

निष्पक्वे क्वथितं पाके क्षीराज्य हविषां शृतम् ।। ३.१.१९३ ।।

निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले ।। ३.१.१९४ ।।

पक्वं परिणते गूनं हन्ने मीढं तु मूत्रिते ।। ३.१.१९५ ।।

पुष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते ।। ३.१.१९६ ।।

दान्तस्तु दमिते शान्तः शमिते प्रार्थितेऽर्दितः ।। ३.१.१९७ ।।

ज्ञप्तस्तु ज्ञपिते छन्नश्छादिते पूजितेऽञ्चितः ।। ३.१.१९८ ।।

पूर्णस्तु पूरिते क्लिष्टः क्लिशितेऽवसिते सितः ।। ३.१.१९९ ।।

प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते ।। ३.१.२०० ।।

वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते ।। ३.१.२०१ ।।

निष्प्रभे विगतारोकौ विलीने विद्रुतद्रुतौ ।। ३.१.२०२ ।।

सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ ।। ३.१.२०३ ।।

ऊतं स्यूतमुतं चेति त्रितयं तन्तु सन्तते ।। ३.१.२०४ ।।

स्यादर्हिते नमस्यितनमसितमपचायितार्चितापचितम् ।। ३.१.२०५ ।।

वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ।। ३.१.२०६ ।।

संतापितसंतप्तौ धूपित धूपायितौ च दूनश्च ।। ३.१.२०७ ।।

हृष्टो मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।। ३.१.२०८ ।।

छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ।। ३.१.२०९ ।।

स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ।। ३.१.२१० ।।

लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ।। ३.१.२११ ।।

अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ।। ३.१.२१२ ।।

आर्द्रं सार्द्रं क्लिन्नं तिमितं स्मिमितं समुन्नमुत्तं च ।। ३.१.२१३ ।।

त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ।। ३.१.२१४ ।।

अवगणितमवमतावज्ञाते अवमानितं च परिभूते ।। ३.१.२१५ ।।

त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ।। ३.१.२१६ ।।

उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ।। ३.१.२१७ ।।

बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ।। ३.१.२१८ ।।

उरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।। ३.१.२१९ ।।

संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ।। ३.१.२२० ।।

ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ।। ३.१.२२१ ।।

अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ।। ३.१.२२२ ।।

भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम् ।। ३.१.२२३ ।।

अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ।। ३.१.२२४ ।।

क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ।। ३.१.२२५ ।।

क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुलप्रकर्षार्थाः ।। ३.१.२२६ ।।

साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ।। ३.१.२२७ ।।

बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ।। ३.१.२२८ ।।

।। **संकीर्णवर्गः** । ।।

प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् ।। ३.२.२२९ ।।

।। । अथ संकीर्णवर्गः ।।

कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ।। ३.२.२३० ।।

साकल्यासंगवचने पारायणपरायणे ।। ३.२.२३१ ।।

यदृच्छा स्वैरिता हेतुशून्या त्वास्था विलक्षणम् ।। ३.२.२३२ ।।

शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ।। ३.२.२३३ ।।

अवदानं कर्म वृत्तं काम्यदानं प्रवारणम् ।। ३.२.२३४ ।।

वशक्रिया संवननं मूलकर्म तु कार्मणम् ।। ३.२.२३५ ।।

विधूननं विधुवनं तर्पणं प्रीणनावनम् ।। ३.२.२३६ ।।

पर्याप्तिः स्यात्परित्राणं हस्तधारणमित्यपि ।। ३.२.२३७ ।।

सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ।। ३.२.२३८ ।।

आक्रोशनमभीषङ्गः संवेदो वेदना न ना ।। ३.२.२३९ ।।

संमूर्च्छनमभिव्याप्तिर्याञ्चा भिक्षार्थनार्दना ।। ३.२.२४० ।।

वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने ।। ३.२.२४१ ।।

आप्रच्छन्नमथाम्नायः संप्रदायः क्षये क्षिया ।। ३.२.२४२ ।।

ग्रहे ग्राहो वशः कान्तौ रक्षणस्त्राणे रणः कणे ।। ३.२.२४३ ।।

व्यधो वेधे पचा पाके हवो हूतौ वरो वृत्तौ ।। ३.२.२४४ ।।

ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ ।। ३.२.२४५ ।।

स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः स्रवे ।। ३.२.२४६ ।।

एधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा ।। ३.२.२४७ ।।

प्रसूतिः प्रसवे श्च्योते प्राधारः क्लमथः क्लमे ।। ३.२.२४८ ।।

उत्कर्षोऽतिशये सन्धिः श्लेषे विषय आश्रये ।। ३.२.२४९ ।।

क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ।। ३.२.२५० ।।

उन्नाय उन्नये श्रायः श्रयणे जयने जयः ।। ३.२.२५१ ।।

निगादो निगदे मादो मद उद्वेग उद्भ्रमे ।। ३.२.२५२ ।।

विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः ।। ३.२.२५३ ।।

निग्रहस्तद्विरुद्धः स्यादभियोगस्त्वभिग्रहः ।। ३.२.२५४ ।।

मुष्टिबन्धस्तु संग्राहो डिम्बे डमरविप्लवौ ।। ३.२.२५५ ।।

बन्धनं प्रसितिश्चारः स्पर्शः स्प्रष्टोपतप्तरि ।। ३.२.२५६ ।।

निकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम् ।। ३.२.२५७ ।।

परिणामो विकारे द्वे समे विकृतिविक्रिये ।। ३.२.२५८ ।।

अपहारस्त्वपचयः समाहारः समुच्चयः ।। ३.२.२५९ ।।

प्रत्याहार उपादानं विहारस्तु परिक्रमः ।। ३.२.२६० ।।

अभिहारोऽभिग्रहणं निहारोऽभ्यवकर्षणम् ।। ३.२.२६१ ।।

अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः ।। ३.२.२६२ ।।

प्रवाहस्तु प्रवृत्तिः स्यात्प्रवहो गमनं बहिः ।। ३.२.२६३ ।।

वियामो वियमो यामो यमः संयामसंयमौ ।। ३.२.२६४ ।।

हिम्साकर्माभिचारः स्याज्जागर्या जांगरा द्वयोः ।। ३.२.२६५ ।।

विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये ।। ३.२.२६६ ।।

निर्वेश उपभोगः स्यात्परिसर्पः परिक्रिया ।। ३.२.२६७ ।।

विधुरं तु प्रविश्लेषेऽभिप्रायश्छन्द आशयः ।। ३.२.२६८ ।।

संक्षेपणं समसनं पर्यवस्था विरोधनम् ।। ३.२.२६९ ।।

परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ।। ३.२.२७० ।।

विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ।। ३.२.२७१ ।।

संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम् ।। ३.२.२७२ ।।

संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् ।। ३.२.२७३ ।।

नीवाकस्तु प्रयामः स्यात्संनिधिः संनिकर्षणम् ।। ३.२.२७४ ।।

लवोऽभिलाषो लवने निष्पावः पवने पवः ।। ३.२.२७५ ।।

प्रस्तावः स्यादपसरस्त्रसरः सूत्रवेष्टनम् ।। ३.२.२७६ ।।

प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ ।। ३.२.२७७ ।।

धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ।। ३.२.२७८ ।।

प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः स्यादुपक्रमः ।। ३.२.२७९ ।।

स्यादभ्यादानमुद्घात आरम्भः संभ्रमस्त्वरा ।। ३.२.२८० ।।

प्रतिबन्धः प्रविष्टम्भोऽवनायस्तु निपातनम् ।। ३.२.२८१ ।।

उपलम्भस्त्वनुभवः समालम्भो विलेपनम् ।। ३.२.२८२ ।।

विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम् ।। ३.२.२८३ ।।

विश्रावस्तु प्रतिख्यातिरवेक्षा प्रतिजागरः ।। ३.२.२८४ ।।

निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने ।। ३.२.२८५ ।।

आदीनवास्रवौ क्लेशे मेलके संगसंगमौ ।। ३.२.२८६ ।।

संवीक्षनं विचयनं मार्गणं मृगणा मृगः ।। ३.२.२८७ ।।

परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ।। ३.२.२८८ ।।

निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।। ३.२.२८९ ।।

प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ।। ३.२.२९० ।।

उपशायो विशायश्च पर्यायशयनार्थकौ ।। ३.२.२९१ ।।

अर्तनं च ऋतीया च हृणीया च घृणार्थकाः ।। ३.२.२९२ ।।

स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।। ३.२.२९३ ।।

पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ।। ३.२.२९४ ।।

प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।। ३.२.२९५ ।।

स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ।। ३.२.२९६ ।।

निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।। ३.२.२९७ ।।

स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ।। ३.२.२९८ ।।

आविधो विध्यते येन तत्र विष्वक्समे निघः ।। ३.२.२९९ ।।

उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ।। ३.२.३०० ।।

निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ।। ३.२.३०१ ।।

आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः ।। ३.२.३०२ ।।

निष्ठयूतिर्निष्ठेवननिष्ठीवनमित्यभिन्नानि ।। ३.२.३०३ ।।

जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः ।। ३.२.३०४ ।।

उदजस्तु पशु प्रेरणमकरणिरित्यादयः शापे ।। ३.२.३०५ ।।

गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ।। ३.२.३०६ ।।

आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ।। ३.२.३०७ ।।

माणवानां तु माणव्यं सहायानां सहायता ।। ३.२.३०८ ।।

हल्या हलानां ब्राहमण्यवाडव्ये तु द्विजन्मनाम् ।। ३.२.३०९ ।।

द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात् ।। ३.२.३१० ।।

खलानां खलिनी खल्याप्यथ मानुष्यकं नृणाम् ।। ३.२.३११ ।।

ग्रामता जनता धूम्या पाश्या गल्या पृथक्पृथक् ।। ३.२.३१२ ।।

अपि साहस्रकारीषवार्मणाथर्वणादिकं । ।। ३.२.३१३ ।।

।। **नानार्थवर्गः** ।।

नानार्थाः केऽपि कान्तादि वर्गेष्वेवात्र कीर्तिताः ।। ३.३.३१४ ।।

।। । **अथ नानार्थवर्गः** ।।

भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ।। ३.३.३१५ ।।

आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ।। ३.३.३१६ ।।

पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ।। ३.३.३१७ ।।

जम्बुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटार्भकौ ।। ३.३.३१८ ।।

आलोकौ दर्शनद्योतौ भेरीपटकमानकौ ।। ३.३.३१९ ।।

उत्सङ्गचिह्नयोरङ्कः कलङ्कोऽङ्कापवादयोः ।। ३.३.३२० ।।

तक्षको नागवर्द्धक्योरर्कः स्फटिकसूर्ययोः ।। ३.३.३२१ ।।

मरुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ।। ३.३.३२२ ।।

स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ।। ३.३.३२३ ।।

उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।। ३.३.३२४ ।।

कमण्डलौ च करकः सुगते च विनायकः ।। ३.३.३२५ ।।

किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः ।। ३.३.३२६ ।।

प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ।। ३.३.३२७ ।।

स्याद्भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च ।। ३.३.३२८ ।।

ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ।। ३.३.३२९ ।।

सिते च खदिरे सोमवल्कः स्यादथ सिह्वके ।। ३.३.३३० ।।

तिलकल्के च पिण्याको बाह्लीकं रामठेऽपि च ।। ३.३.३३१ ।।

महेन्द्र गुग्गुलूलूकव्यालग्राहिषु कौशिकः ।। ३.३.३३२ ।।

रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु ।। ३.३.३३३ ।।

जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः ।। ३.३.३३४ ।।

व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः ।। ३.३.३३५ ।।

शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम् ।। ३.३.३३६ ।।

पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ।। ३.३.३३७ ।।

शीलान्वयावनूके द्वे शल्के शकलवल्कले ।। ३.३.३३८ ।।

साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ।। ३.३.३३९ ।।

दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः ।। ३.३.३४० ।।

दम्भेऽप्यथ पिनाकोऽस्त्री शूलशङ्करधन्वनोः ।। ३.३.३४१ ।।

धेनुका तु करेण्वां च मेघजाले च कालिका ।। ३.३.३४२ ।।

कारिका यातनावृत्त्योः कर्णिका कर्णभूषणे ।। ३.३.३४३ ।।

करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे ।। ३.३.३४४ ।।

वृन्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ।। ३.३.३४५ ।।

स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ।। ३.३.३४६ ।।

ललाटिकः प्रभोर्भालदर्शी कार्याक्षमश् ।। ३.३.३४७ ।।

च यः ।। ३.३.३४८ ।।

भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् ।। ३.३.३४९ ।।

सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ।। ३.३.३५० ।।

पाकौ पक्तिशिशू मध्यरत्ने नेतरि नायकः ।। ३.३.३५१ ।।

पर्यङ्कः स्यात्परिकरे स्याद्व्याग्रेऽपि च लुब्धकः ।। ३.३.३५२ ।।

पेटकस्त्रिषु वृन्देऽपि गुरौ देश्ये च देशिकः ।। ३.३.३५३ ।।

खेटकौ ग्रामफलकौ धीवरेऽपिच जालिकः ।। ३.३.३५४ ।।

पुष्परेणौ च किञ्जल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च ।। ३.३.३५५ ।।

स्यात्कल्लोलेऽप्युत्कलिका वार्धकं भाववृन्दयोः ।। ३.३.३५६ ।।

करिण्यां चापि गणिका दारकौ बालभेदकौ ।। ३.३.३५७ ।।

अन्धेऽप्यनेडमूकः स्यात्टङ्कौ दर्पाश्मदारणौ ।। ३.३.३५८ ।।

मृद्भाण्डेऽप्युष्ट्रिका मन्थे खजकं रसदर्वके ।। ३.३.३५९ ।।

इति कान्ताः ।। ३.३.३६० ।।

मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ ।। ३.३.३६१ ।।

शङ्खो निधौ ललटास्थ्निकम्बौ न स्त्रीन्द्रियेऽपि खम् ।। ३.३.३६२ ।।

धृणिज्वाले अपि शिखे शैलवृक्षौ नगावगौ ।। ३.३.३६३ ।।

इति खान्ताः ।। ३.३.३६४ ।।

आशुगौ वायुविशिखौ शरार्कविहगाः खगाः ।। ३.३.३६५ ।।

पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः ।। ३.३.३६६ ।।

पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ।। ३.३.३६७ ।।

परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ।। ३.३.३६८ ।।

गजेऽपि नागमातङ्गावपाङ्गस्तिलकेऽपि च ।। ३.३.३६९ ।।

सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।। ३.३.३७० ।।

योगः संनहनोपायध्यानसंगतियुक्तिषु ।। ३.३.३७१ ।।

भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।। ३.३.३७२ ।।

चातके हरिणे पुंसि सारङ्गः शवले त्रिषु ।। ३.३.३७३ ।।

कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे ।। ३.३.३७४ ।।

यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ।। ३.३.३७५ ।।

स्वर्गेषुपशुवाग्वज्र दिङ्नेत्रधृणिभूजले ।। ३.३.३७६ ।।

लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्न शेफसोः ।। ३.३.३७७ ।।

शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः ।। ३.३.३७८ ।।

भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ।। ३.३.३७९ ।।

इति गान्ताः ।। ३.३.३८० ।।

परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये ।। ३.३.३८१ ।।

मूल्ये पूजाविधावर्घोऽहोदुःखव्यसनेष्वघम् ।। ३.३.३८२ ।।

त्रिष्विष्टेऽल्पे लघुः काचाः शिक्यमृद्भेददृग्रुजः ।। ३.३.३८३ ।।

इति घान्ताः ।। ३.३.३८४ ।।

विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः ।। ३.३.३८५ ।।

मास्यमात्ये चाप्युपधे पुंसि मेध्ये सिते त्रिषु ।। ३.३.३८६ ।।

अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ।। ३.३.३८७ ।।

इति चान्ताः ।। ३.३.३८८ ।।

प्रसन्ने भल्लुकेऽप्यच्छो गुच्छः स्तबक हारयोः ।। ३.३.३८९ ।।

परिधानाञ्चले कच्छो जलप्रान्ते त्रि लिङ्गकः ।। ३.३.३९० ।।

इति क्षेपकच्छान्ताः ।। ३.३.३९१ ।।

केकि ताक्ष्यावहिभुजौ दन्तविप्राण्डजा द्विजाः ।। ३.३.३९२ ।।

अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ।। ३.३.३९३ ।।

धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न स्त्रियाम् ।। ३.३.३९४ ।।

वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ।। ३.३.३९५ ।।

समे क्ष्मांशे रणेऽप्याजिः प्रजा स्यात्संततौ जने ।। ३.३.३९६ ।।

अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं त्रिषु ।। ३.३.३९७ ।।

इति जान्ताः ।। ३.३.३९८ ।।

पुंस्यात्मनि प्रवीणेच क्षेत्रज्ञो वाच्यलिङ्गकः ।। ३.३.३९९ ।।

संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ।। ३.३.४०० ।।

दोषज्ञौ वैद्यविद्वांसौ ज्ञो विद्वान्सोमजोऽपि च ।। ३.३.४०१ ।।

इति ञान्ताः ।। ३.३.४०२ ।।

काकेभगण्डौ करटौ गजगण्डकटी कटौ ।। ३.३.४०३ ।।

शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ।। ३.३.४०४ ।।

देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः ।। ३.३.४०५ ।।

रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ।। ३.३.४०६ ।।

रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे ।। ३.३.४०७ ।।

मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।। ३.३.४०८ ।।

अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।। ३.३.४०९ ।।

सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि सा ।। ३.३.४१० ।।

अत्युत्कर्षाश्रयः कोट्यो मूले लग्नकचे जटा ।। ३.३.४११ ।।

व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ।। ३.३.४१२ ।।

इष्टिर्यागेच्छयोः सृष्टं निश्चिते बहुनि त्रिषु (ऽबहूनिऽ? ।। ३.३.४१३ ।।

कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु तु ।। ३.३.४१४ ।।

पटुर्द्वौ वाच्यलिङ्गौ च नीलकण्ठः शिवेऽपि च ।। ३.३.४१५ ।।

पोटा दासी द्विलिंगा च घृष्टी घर्षणसूकरौ ।। ३.३.४१६ ।।

घटा घोष्ठ्यां हस्तिपङ्क्तौ कृपीटमुदरे जले ।। ३.३.४१७ ।।

इति टान्ताः ।। ३.३.४१८ ।।

पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ।। ३.३.४१९ ।।

निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि ।। ३.३.४२० ।।

त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः ।। ३.३.४२१ ।।

इति ठान्ताः ।। ३.३.४२२ ।।

दण्डोऽस्त्री लगुडेऽपि स्याद्गुडो गोलेक्षुपाकयोः ।। ३.३.४२३ ।।

सर्प मांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः ।। ३.३.४२४ ।।

क्ष्वेडवंशशलाकापि नाडी कालेऽपि षट्क्षणे ।। ३.३.४२५ ।।

काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।। ३.३.४२६ ।।

स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।। ३.३.४२७ ।।

इति डान्ताः ।। ३.३.४२८ ।।

भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ।। ३.३.४२९ ।।

संघातग्रासयोः पिण्डी द्वयोः पुंसि कलेवरे ।। ३.३.४३० ।।

गण्डौ कपोलविस्फोटौ मुण्डकस्त्रिषु मुण्डिते ।। ३.३.४३१ ।।

इक्षुभेदेऽपि खण्डोऽस्त्री शिखण्डो बर्हचूडयोः ।। ३.३.४३२ ।।

शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ।। ३.३.४३३ ।।

इति ढान्ताः ।। ३.३.४३४ ।।

भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ।। ३.३.४३५ ।।

कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ।। ३.३.४३६ ।।

पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ।। ३.३.४३७ ।।

मौर्व्यां द्रव्याश्रिते सत्वशौर्यसन्ध्यादिके गुणः ।। ३.३.४३८ ।।

निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।। ३.३.४३९ ।।

वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ।। ३.३.४४० ।।

अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ।। ३.३.४४१ ।।

स्थाणुः शर्वोऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः ।। ३.३.४४२ ।।

ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।। ३.३.४४३ ।।

ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।। ३.३.४४४ ।।

हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ।। ३.३.४४५ ।।

त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः ।। ३.३.४४६ ।।

त्रिष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ।। ३.३.४४७ ।।

वणिक्पथे च विपणिः सुरा प्रत्यक्च वारुणी ।। ३.३.४४८ ।।

करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ।। ३.३.४४९ ।।

शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च ।। ३.३.४५० ।।

विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ।। ३.३.४५१ ।।

प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।। ३.३.४५२ ।।

करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।। ३.३.४५३ ।।

प्राण्युत्पादे संसरणमसंबाधचमूगतौ ।। ३.३.४५४ ।।

घण्टापथेऽथ वान्तान्ने समुद्गिरणमुन्नये ।। ३.३.४५५ ।।

अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ।। ३.३.४५६ ।।

प्रवणे क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ।। ३.३.४५७ ।।

संकीर्णौ निचिताशुद्धा विरिणं शून्यमूषरम् ।। ३.३.४५८ ।।

सेतौ च चरणो वेणी नदीभेदे कचोच्चये ।। ३.३.४५९ ।।

इति णान्ताः ।। ३.३.४६० ।।

देवसूर्यौ विवस्वन्तौ सरस्वन्तौनदार्णवौ ।। ३.३.४६१ ।।

पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ।। ३.३.४६२ ।।

अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ ।। ३.३.४६३ ।।

हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ ।। ३.३.४६४ ।।

यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ।। ३.३.४६५ ।।

यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते ।। ३.३.४६६ ।।

ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ।। ३.३.४६७ ।।

स्थपतिः कारुभेदेऽपि भूभृद्भूमिधरे नृपे ।। ३.३.४६८ ।।

मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्री कुसुमेऽपि च ।। ३.३.४६९ ।।

विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ ।। ३.३.४७० ।।

व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभौ शास्त्रनिदर्शने ।। ३.३.४७१ ।।

क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।। ३.३.४७२ ।।

वृत्तान्तः स्यात्प्रकरणे प्रकारे कात्स्न्र्यवार्तयोः ।। ३.३.४७३ ।।

आनर्तः समरे नृत्यस्थान नीवृद्विशेषयोः ।। ३.३.४७४ ।।

कृतान्तो यम सिद्धान्त दैवाकुशलकर्मसु ।। ३.३.४७५ ।।

श्लेष्मादि रस रक्तादि महा भूतानि तद्गुणाः ।। ३.३.४७६ ।।

इन्द्रियाण्यश्म विकृतिः शब्दयोनिश्च धातवः ।। ३.३.४७७ ।।

कक्षान्तरेऽपि शुद्धान्तो भूपस्यासर्व गोचरे ।। ३.३.४७८ ।।

कासू सामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः । । ।। ३.३.४७९ ।।

विस्तार वल्लयोर्व्रततिर्वसती रात्रिवेश्मनोः ।। ३.३.४८० ।।

क्षयार्चयोरपचितिः सातिर्दानावसानयोः । । ।। ३.३.४८१ ।।

आर्तिः पीडा धनुष्कोट्योर्जातिः सामान्यजन्मनोः ।। ३.३.४८२ ।।

प्रचार स्यन्दयो रीतिरीतिर्डिम्ब प्रवासयोः ।। ३.३.४८३ ।।

उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ।। ३.३.४८४ ।।

वीणाभेदेऽपि महती भूतिर्भस्मनि सम्पदि ।। ३.३.४८५ ।।

नदी नगर्योर्नागानां भोगवत्यथ संगरे ।। ३.३.४८६ ।।

संगे सभायां समितिः क्षयवासावपि क्षिती ।। ३.३.४८७ ।।

रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।। ३.३.४८८ ।।

जगती जगति छन्दोविशेषोऽपि क्षितावपि ।। ३.३.४८९ ।।

पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि चायतिः ।। ३.३.४९० ।।

पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ।। ३.३.४९१ ।।

प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः ।। ३.३.४९२ ।।

सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः ।। ३.३.४९३ ।।

वनिता जनितात्यर्थानुरागायां च योषिति ।। ३.३.४९४ ।।

गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः ।। ३.३.४९५ ।।

बृहती क्षुद्र वार्ताकी छन्दोभेदे महत्यपि ।। ३.३.४९६ ।।

वासिता स्त्री करिण्योश्च वार्ता वृत्तौ जनश्रुतौ ।। ३.३.४९७ ।।

वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते ।। ३.३.४९८ ।।

कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ।। ३.३.४९९ ।।

श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् ।। ३.३.५०० ।।

अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ।। ३.३.५०१ ।।

युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।। ३.३.५०२ ।।

वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ।। ३.३.५०३ ।।

महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु ।। ३.३.५०४ ।।

श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु ।। ३.३.५०५ ।।

त्रिष्वितो जगदिङ्गेऽपि रक्तं नील्यादि रागि च ।। ३.३.५०६ ।।

अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ ।। ३.३.५०७ ।।

युक्तेऽति संस्कृतेऽमर्षिण्यभिनीतोऽथ संस्कृतम् ।। ३.३.५०८ ।।

कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि ।। ३.३.५०९ ।।

ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ।। ३.३.५१० ।।

विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ ।। ३.३.५११ ।।

द्वौ चाम्ल परुषौ शुक्तौ शिती धवलमेचकौ ।। ३.३.५१२ ।।

सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ।। ३.३.५१३ ।।

पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।। ३.३.५१४ ।।

निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ।। ३.३.५१५ ।।

जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ।। ३.३.५१६ ।।

वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ।। ३.३.५१७ ।।

समूहोत्पन्नयोर्जातमहिजिच्छ्रीपतीन्द्रयोः ।। ३.३.५१८ ।।

सौप्तिकेऽपि प्रपातोऽथावपातावतटावटौ ।। ३.३.५१९ ।।

समित्सङ्गे रणेऽपि स्त्री व्यवस्थायामपि स्थितिः ।। ३.३.५२० ।।

अर्थोऽभिधेय रै वस्तु प्रयोजन निवृत्तिषु ।। ३.३.५२१ ।।

निपानागमयोस्तीर्थमृषि जुष्टे जले गुरौ ।। ३.३.५२२ ।।

समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च ।। ३.३.५२३ ।।

दशमीस्थौ क्षीणराग वृद्धौ वीथी पदव्यपि ।। ३.३.५२४ ।।

आस्थानी यत्नयोरास्था प्रस्थोऽस्त्री सानु मानयोः ।। ३.३.५२५ ।।

शास्त्र द्रविणयोर्ग्रन्थः संस्थाधारे स्थितौ मृतौ ।। ३.३.५२६ ।।

इति थान्ताः ।। ३.३.५२७ ।।

अभिप्राय वशौ छन्दावब्दौ जीमूत वत्सरौ ।। ३.३.५२८ ।।

अपवादौ तु निन्दाज्ञे दायादौ सुत बान्धवौ ।। ३.३.५२९ ।।

पादा रश्म्यङ्घ्रि तुर्यांशाश्चन्द्राग्न्यर्कास्तमोनुदः ।। ३.३.५३० ।।

निर्वादो जनवादेऽपि शादो जम्बाल शष्पयोः ।। ३.३.५३१ ।।

आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ।। ३.३.५३२ ।।

स्यात्प्रसादोऽनुरगेऽपि सूदः स्याद्व्यञ्जनेऽपि च ।। ३.३.५३३ ।।

गोष्ठाध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन्मदः ।। ३.३.५३४ ।।

प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।। ३.३.५३५ ।।

स्त्री संविज्ज्ञान संभाषा क्रियाकाराजि नामसु ।। ३.३.५३६ ।।

धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् ।। ३.३.५३७ ।।

पदं व्यवसिति त्राण स्थान लक्ष्माङ्घ्रि वस्तुषु ।। ३.३.५३८ ।।

गोष्पदं सेविते माने प्रतिष्ठा कृत्यमास्पदम् ।। ३.३.५३९ ।।

त्रिष्विष्ट मधुरौ स्वादू मृदू चातीक्ष्ण कोमलौ ।। ३.३.५४० ।।

मूढाल्पापटु निर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ ।। ३.३.५४१ ।।

प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ।। ३.३.५४२ ।।

इति दान्ताः ।। ३.३.५४३ ।।

व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः ।। ३.३.५४४ ।।

पर्याहारश्च मार्गश्,ह्च विवधौ वीवधौ च तौ ।। ३.३.५४५ ।।

परिधिर्यज्ञिय तरोः शाखायामुपसूर्यके ।। ३.३.५४६ ।।

बन्धकं व्यसनं चेतः पीडाधिष्ठानमाधयः ।। ३.३.५४७ ।।

स्युः समर्थन नीवाक नियमाश्च समाधयः ।। ३.३.५४८ ।।

दोषोत्पादेऽनुबन्धः स्यात्प्रकृतस्यादि विनश्वरे ।। ३.३.५४९ ।।

मुख्यानुयायिनि शिशौ प्रकृत्यानुवर्तने ।। ३.३.५५० ।।

विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः ।। ३.३.५५१ ।।

विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे ।। ३.३.५५२ ।।

बुध वृद्धौ पण्डितेऽपि स्कन्धः समुदयेऽपि च ।। ३.३.५५३ ।।

देशे नद विशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।। ३.३.५५४ ।।

विधा विधौ प्रकारे च साधू रम्येऽपि च त्रिषु ।। ३.३.५५५ ।।

वधूर्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही ।। ३.३.५५६ ।।

सन्धा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ।। ३.३.५५७ ।।

मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि ।। ३.३.५५८ ।।

अतस्त्रिषु समुन्नद्धौ पण्डितंमन्य गर्वितौ ।। ३.३.५५९ ।।

ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः ।। ३.३.५६० ।।

अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यात भूषितौ ।। ३.३.५६१ ।।

लेशेऽपि गन्धः संबाधो गुह्यसंकुलयोरपि ।। ३.३.५६२ ।।

बाधा निषेधे दुःखे च ज्ञातृचान्द्रिसुरा बुधाः ।। ३.३.५६३ ।।

।। । इति धान्ताः ।।

सूर्य वह्नी चित्रभानू भानू रश्मि दिवाकरौ ।। ३.३.५६४ ।।

भूतात्मानौ धातृ देहौ मूर्ख नीचौ पृथग्जनौ ।। ३.३.५६५ ।।

ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ ।। ३.३.५६६ ।।

तरुशैलौ शिखरिणौ शिखिनौ वह्नि बर्हिणौ ।। ३.३.५६७ ।।

प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ।। ३.३.५६८ ।।

द्वौ सारथि हयारोहौ वाजिनोऽश्वेषु पक्षिणः ।। ३.३.५६९ ।।

कुलेऽप्यभिजनो जन्म भूम्यामप्यथ हायनाः ।। ३.३.५७० ।।

वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः ।। ३.३.५७१ ।।

केशेऽपि वृजिनो विश्वकर्मार्क सुरशिल्पिनोः ।। ३.३.५७२ ।।

आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।। ३.३.५७३ ।।

शक्रो घातुक मत्तेभो वर्षुकाब्दो घनाघनः ।। ३.३.५७४ ।।

अभिमानोऽर्थादि दर्पे ज्ञाने प्रणय हिंसयोः ।। ३.३.५७५ ।।

घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ।। ३.३.५७६ ।।

इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ।। ३.३.५७७ ।।

वाणिन्यौ नर्तकी दूत्यौ स्रवन्त्यामपि वाहिनी ।। ३.३.५७८ ।।

ह्लादिन्यौ वज्रतडितौ वन्दायामपि कामिनी ।। ३.३.५७९ ।।

त्वग्देहयोरपि तनुः सूनाधो जिह्विकापि च ।। ३.३.५८० ।।

क्रतु विस्तारयोरस्त्री वितानं त्रिषु तुच्छके ।। ३.३.५८१ ।।

मन्देऽथ केतनं कृत्ये केतावुपनिमन्त्रणे ।। ३.३.५८२ ।।

वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ।। ३.३.५८३ ।।

उत्साहने च हिंसायां सूचने चापि गन्धनम् ।। ३.३.५८४ ।।

आतञ्चनं प्रतीवाप जवनाप्यायनार्थकम् ।। ३.३.५८५ ।।

व्यञ्जनं लाञ्छनं श्मश्रु निष्ठानावयवेष्वपि ।। ३.३.५८६ ।।

स्यात्कौलीनं लोकवादे युद्धे पश्वहि पक्षिणाम् ।। ३.३.५८७ ।।

स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ।। ३.३.५८८ ।।

अवकाशे स्थितौ स्थानं क्रीडादावपि देवनम् ।। ३.३.५८९ ।।

व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ।। ३.३.५९० ।।

उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च ।। ३.३.५९१ ।।

मारणे मृतसंस्कारे गतौ द्रव्येऽर्थ दापने ।। ३.३.५९२ ।।

निर्वर्तनोपकरणानुव्रज्यासु च साधनम् ।। ३.३.५९३ ।।

निर्यातनं वैर शुद्धौ दाने न्यासार्पणेऽपि च ।। ३.३.५९४ ।।

व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ।। ३.३.५९५ ।।

पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यम्शेऽप्यणीयसि ।। ३.३.५९६ ।।

तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेऽध्वनि ।। ३.३.५९७ ।।

अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते ।। ३.३.५९८ ।।

प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिह्नयोः ।। ३.३.५९९ ।।

प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः ।। ३.३.६०० ।।

क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ।। ३.३.६०१ ।।

गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे ।। ३.३.६०२ ।।

संनिवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः ।। ३.३.६०३ ।।

आच्छादने संविधानमपवारणमित्युभे ।। ३.३.६०४ ।।

आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ।। ३.३.६०५ ।।

अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।। ३.३.६०६ ।।

रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने ।। ३.३.६०७ ।।

तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे ।। ३.३.६०८ ।।

समानाः सत्समैके स्युः पिशुनौ खलसूचकौ ।। ३.३.६०९ ।।

हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ ।। ३.३.६१० ।।

अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि ।। ३.३.६११ ।।

।। । इति नान्ताः ।।

कलापो भूषणे बर्हे तूणीरे संहतावपि ।। ३.३.६१२ ।।

परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ।। ३.३.६१३ ।।

गोधुग्गोष्ठपती गोपौ हरविष्णू वृषाकपी ।। ३.३.६१४ ।।

बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम् ।। ३.३.६१५ ।।

तल्पं शय्याट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम् ।। ३.३.६१६ ।।

प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ।। ३.३.६१७ ।।

भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च कच्छपी ।। ३.३.६१८ ।।

कुतपो मृगरोमोत्थपटे चाह्नो.ष्टमेंऽशके ।। ३.३.६१९ ।।

।। । इति पान्ताः ।।

शिफा शिखायां सरिति मांसिकायां च मातरि ।। ३.३.६२० ।।

शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च ।। ३.३.६२१ ।।

गुल्फः स्याद्गुंफने बाहोरलंकारे च कीर्तितः ।। ३.३.६२२ ।।

रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः ।। ३.३.६२३ ।।

।। । इति फान्ताः ।।

अन्तराभवसत्वेऽश्वे गन्धर्वो दिव्यगायने ।। ३.३.६२४ ।।

कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ ।। ३.३.६२५ ।।

पूर्वोऽन्यलिङ्गः प्रागाह पुमूबहुत्वेऽपि पूर्वजान् ।। ३.३.६२६ ।।

चित्रपुङ्खेऽपि कादम्बो नितम्बोऽद्रितटे कटौ ।। ३.३.६२७ ।।

दर्वी फणापि बिम्बोऽस्त्री मण्डलेऽपि च ।। ३.३.६२८ ।।

।। । इति बान्ताः ।।

कुम्भौ घटेभमूर्धांशौ डिम्भौ तु शिशुबालिशौ ।। ३.३.६२९ ।।

स्तम्भौ स्थूणाजडीभावौ शम्भू ब्रह्मत्रिलोचनौ ।। ३.३.६३० ।।

कुक्षिभ्रूणार्भका गर्भा विस्रम्भः प्रणयेऽपि च ।। ३.३.६३१ ।।

स्याद्भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ।। ३.३.६३२ ।।

स्यान्महारजते क्लीबं कुसुम्भं करके पुमान् ।। ३.३.६३३ ।।

क्षत्रियेऽपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम् ।। ३.३.६३४ ।।

सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः ।। ३.३.६३५ ।।

।। । इति भान्ताः ।।

किरण प्रग्रहौ रश्मी कपिभेकौ प्लवङ्गमौ ।। ३.३.६३६ ।।

इच्छामनोभवौ कामौ शक्त्युद्योगौ पराक्रमौ ।। ३.३.६३७ ।।

धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।। ३.३.६३८ ।।

उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ।। ३.३.६३९ ।।

वणिक्पथः पुरं वेदो निगमा नागरो वणिक् ।। ३.३.६४० ।।

नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु ।। ३.३.६४१ ।।

शब्दादिपूर्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः ।। ३.३.६४२ ।।

स्तोमः स्तोत्रेऽध्वरे वृन्दे जिह्वास्तु कुतिलेऽलसे ।। ३.३.६४३ ।।

उष्णेऽपि घर्मश्चेष्टालङ्कारे भ्रान्तौ च विभ्रमः ।। ३.३.६४४ ।।

गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः ।। ३.३.६४५ ।।

क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ।। ३.३.६४६ ।।

त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा ।। ३.३.६४७ ।।

ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ।। ३.३.६४८ ।।

सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु ।। ३.३.६४९ ।।

वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ ।। ३.३.६५० ।।

जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ।। ३.३.६५१ ।।

।। । इति गान्ताः ।।

तुरङ्गगरुडौ ताक्ष्यौ निलयापचयौ क्षयौ ।। ३.३.६५२ ।।

श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ ।। ३.३.६५३ ।।

पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः ।। ३.३.६५४ ।।

तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे ।। ३.३.६५५ ।।

प्रत्ययोऽधीन शपथज्ञानविश्वासहेतुषु ।। ३.३.६५६ ।।

रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः ।। ३.३.६५७ ।।

स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते ।। ३.३.६५८ ।।

समयाः शपथाचारकालसिद्धान्तसंविदः ।। ३.३.६५९ ।।

व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ।। ३.३.६६० ।।

अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ।। ३.३.६६१ ।।

युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेऽपि च ।। ३.३.६६२ ।।

पस्चादवस्थायि बलं समवायश्च सन्नयौ ।। ३.३.६६३ ।।

संघाते संनिवेशे च संस्त्यायः प्रणयास्त्वमी ।। ३.३.६६४ ।।

विस्रम्भयाञ्चाप्रेमाणो विरोधेऽपि समुच्छ्रयः ।। ३.३.६६५ ।।

विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ।। ३.३.६६६ ।।

निर्यासेऽपि कषायो स्त्री सभायां च प्रतिश्रयः ।। ३.३.६६७ ।।

प्रायो भूम्न्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि ।। ३.३.६६८ ।।

रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ।। ३.३.६६९ ।।

वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाश्रये ।। ३.३.६७० ।।

धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम् ।। ३.३.६७१ ।।

कशेरु हेम्नोर्गाङ्गेयं विशल्या दन्तिकापि च ।। ३.३.६७२ ।।

वृषाकपायी श्रीगौर्योरभिज्ञा नामशोभयोः ।। ३.३.६७३ ।।

आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ।। ३.३.६७४ ।।

उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ।। ३.३.६७५ ।।

छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ।। ३.३.६७६ ।।

कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ।। ३.३.६७७ ।।

कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ।। ३.३.६७८ ।।

जन्यः स्याज्जनवादेऽपि जघन्योऽन्त्येऽधमेऽपि च ।। ३.३.६७९ ।।

गर्ह्याधीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ ।। ३.३.६८० ।।

आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि ।। ३.३.६८१ ।।

रूप्यं प्रशस्तरूपेऽपि वदान्यो वल्गुवागपि ।। ३.३.६८२ ।।

न्याय्येऽपि मध्यं सौम्यं तु सुन्दरे सोमदैवते ।। ३.३.६८३ ।।

।। । इति यान्ताः ।।

निवहावसरौ वारौ संस्तरौ प्रस्तराध्वरौ ।। ३.३.६८४ ।।

गुरू गोष्पतिपित्राद्यौ द्वापरौ युगसंशयौ ।। ३.३.६८५ ।।

प्रकारौ भेदसादृश्ये आकाराविङ्गिताकृती ।। ३.३.६८६ ।।

किंशारू धान्यशूकेषु मरू धन्वधराधरौ ।। ३.३.६८७ ।।

अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ ।। ३.३.६८८ ।।

ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः कराः ।। ३.३.६८९ ।।

प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि ।। ३.३.६९० ।।

अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ ।। ३.३.६९१ ।।

स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः ।। ३.३.६९२ ।।

मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु ।। ३.३.६९३ ।।

कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु संगरः ।। ३.३.६९४ ।।

वेदभेदे गुप्तवादे मन्त्रो मित्रो रवावपि ।। ३.३.६९५ ।।

मखेषु यूपखण्डेऽपि स्वरुर्गुह्येऽप्यवस्करः ।। ३.३.६९६ ।।

आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ।। ३.३.६९७ ।।

अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च ।। ३.३.६९८ ।।

स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे ।। ३.३.६९९ ।।

विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ।। ३.३.७०० ।।

द्वारि द्वाः स्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।। ३.३.७०१ ।।

विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु ।। ३.३.७०२ ।।

सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ।। ३.३.७०३ ।।

दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ।। ३.३.७०४ ।।

महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम् ।। ३.३.७०५ ।।

मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।। ३.३.७०६ ।।

देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ।। ३.३.७०७ ।।

वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ।। ३.३.७०८ ।।

ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ।। ३.३.७०९ ।।

यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।। ३.३.७१० ।।

शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।। ३.३.७११ ।।

शर्करा कर्परांशेऽपि यात्रा स्याद्यापने गतौ ।। ३.३.७१२ ।।

इरा भूवाक्सुराप्सुस्यात्तन्द्री निद्राप्रमीलयोः ।। ३.३.७१३ ।।

धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ।। ३.३.७१४ ।।

क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।। ३.३.७१५ ।।

त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं मात्रा परिच्छदे ।। ३.३.७१६ ।।

अल्पे च परिमाणे सा मात्रं कात्स्न्र्येऽवधारणे ।। ३.३.७१७ ।।

आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः ।। ३.३.७१८ ।।

योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः ।। ३.३.७१९ ।।

निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः ।। ३.३.७२० ।।

स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः ।। ३.३.७२१ ।।

मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च ।। ३.३.७२२ ।।

सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ।। ३.३.७२३ ।।

अजिरं विषये कायेऽप्यंबरं व्योम्नि वाससि ।। ३.३.७२४ ।।

चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च ।। ३.३.७२५ ।।

स्वर्णेऽपि भूरिचन्द्रौ द्वौ द्वारमात्रेऽपि गोपुरम् ।। ३.३.७२६ ।।

गुहादम्भौ गह्वरे द्वे रहोऽन्तिकमुपह्वरे ।। ३.३.७२७ ।।

पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम् ।। ३.३.७२८ ।।

मन्दिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ।। ३.३.७२९ ।।

दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ ।। ३.३.७३० ।।

तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ।। ३.३.७३१ ।।

औशीरश्चामरे दण्डेऽप्यौशीरं शयनासने ।। ३.३.७३२ ।।

पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।। ३.३.७३३ ।।

व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ।। ३.३.७३४ ।।

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।। ३.३.७३५ ।।

छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ।। ३.३.७३६ ।।

मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् ।। ३.३.७३७ ।।

शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ।। ३.३.७३८ ।।

गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः ।। ३.३.७३९ ।।

जठरः कठिनेऽपि स्यादधस्तादपि चाधरः ।। ३.३.७४० ।।

अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले ।। ३.३.७४१ ।।

उपरुदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः ।। ३.३.७४२ ।।

एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः ।। ३.३.७४३ ।।

स्वादुप्रियौ च मधुरौ क्रूरौ कठिननिर्दयौ ।। ३.३.७४४ ।।

उदारौ दातृमहतोरितरस्त्वन्यनीचयोः ।। ३.३.७४५ ।।

मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ।। ३.३.७४६ ।।

आसारो वेगवद्वर्षे सैन्यप्रसरणं तथा ।। ३.३.७४७ ।।

धाराम्बुपाते चोत्कर्षेऽस्त्रौ कटाहे तु कर्परः ।। ३.३.७४८ ।।

बन्धुरं सुन्दरे नम्रे गिरिर्गेन्दुकशैलयोः ।। ३.३.७४९ ।।

चरुः स्थाल्यां हविः पक्तावधीरः कातरे चले ।। ३.३.७५० ।।

।। । इति रान्ताः ।।

चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ।। ३.३.७५१ ।।

द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ।। ३.३.७५२ ।।

कृतान्तानेहसोः कालश्चतुर्थेऽपि युगे कलिः ।। ३.३.७५३ ।।

स्यात्कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः ।। ३.३.७५४ ।।

करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् ।। ३.३.७५५ ।।

स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ।। ३.३.७५६ ।।

वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ।। ३.३.७५७ ।।

भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः ।। ३.३.७५८ ।।

मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् ।। ३.३.७५९ ।।

शङ्कावपि द्वयोः कीलः पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ।। ३.३.७६० ।।

कला शिल्पे कालभेदे चाली सख्यावली अपि ।। ३.३.७६१ ।।

अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।। ३.३.७६२ ।।

बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ।। ३.३.७६३ ।।

लीला विलासक्रियायोरुपला शर्करापि च ।। ३.३.७६४ ।।

शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः ।। ३.३.७६५ ।।

जालं समूह आनायगवाक्षक्षारकेष्वपि ।। ३.३.७६६ ।।

शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् ।। ३.३.७६७ ।।

छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ।। ३.३.७६८ ।।

अधस्स्वरूपयोरस्त्री तलं स्याच्चामिषे पलम् ।। ३.३.७६९ ।।

और्वानलेऽपि पातालं चैलं वस्त्रेऽधमे त्रिषु ।। ३.३.७७० ।।

कुकूलम् शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ।। ३.३.७७१ ।।

निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ।। ३.३.७७२ ।।

पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ।। ३.३.७७३ ।।

प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च ।। ३.३.७७४ ।।

करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः ।। ३.३.७७५ ।।

मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः ।। ३.३.७७६ ।।

कुलं गृहेऽपि तालाङ्के कुबेरे चैककुण्डलः ।। ३.३.७७७ ।।

स्त्रीभावावज्ञयोर्हेला हेलिः सूर्ये रणे हिलिः ।। ३.३.७७८ ।।

हालः स्यान्नृपतौ मद्ये शकलच्छदयोर्दलम् ।। ३.३.७७९ ।।

तूलिश्चित्रोपकरणशलाकातूलशय्ययोः ।। ३.३.७८० ।।

तुमुलं व्याकुले शब्दे शष्कुली कर्णपाल्यपि ।। ३.३.७८१ ।।

।। । इति लान्ताः ।।

दवदावौ वनारण्यवह्नी जन्महरौ भवौ ।। ३.३.७८२ ।।

मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः ।। ३.३.७८३ ।।

अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः ।। ३.३.७८४ ।।

भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ।। ३.३.७८५ ।।

स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।। ३.३.७८६ ।।

अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ।। ३.३.७८७ ।।

उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सवः ।। ३.३.७८८ ।।

अनुभावः प्रभावे च सतां च मतिनिश्चये ।। ३.३.७८९ ।।

स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ।। ३.३.७९० ।।

शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ।। ३.३.७९१ ।।

ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु ।। ३.३.७९२ ।।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ।। ३.३.७९३ ।।

स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ।। ३.३.७९४ ।।

शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः ।। ३.३.७९५ ।।

द्रव्यासु व्यवसायेऽपि सत्त्वमस्त्री तु जन्तुषु ।। ३.३.७९६ ।।

क्लीबं नपुंसकं षण्डे वाच्यलिङ्गमविक्रमे ।। ३.३.७९७ ।।

।। । इति वान्ताः ।।

द्वौ विशौ वैश्यमनुजौ द्वौ चाराभिमरौ स्पशौ ।। ३.३.७९८ ।।

द्वौ राशी पुञ्जमेषाद्यौ द्वौ वंशौ कुलमस्करौ ।। ३.३.७९९ ।।

रहः प्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः ।। ३.३.८०० ।।

कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ।। ३.३.८०१ ।।

पदे लक्ष्ये निमित्तेऽपदेशः स्यात्कुशमप्सु च ।। ३.३.८०२ ।।

दशावस्थानेकविधाप्याशा तृष्णापि चायता ।। ३.३.८०३ ।।

वशा स्त्री करिणी च स्यात्दृग्ज्ञाने ज्ञातरि त्रिषु ।। ३.३.८०४ ।।

स्यात्कर्कशः साहसिकः कठोरामसृणावपि ।। ३.३.८०५ ।।

प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः ।। ३.३.८०६ ।।

नाशः क्षये तिरोधाने जीवितेशः प्रिये यमे ।। ३.३.८०७ ।।

नृशंसखड्गौ निस्त्रिंशावंशुः सूर्येऽंशवः कराः ।। ३.३.८०८ ।।

आश्वाख्या शालिशीघ्रार्थे पाशो बन्धनशस्त्रयोः ।। ३.३.८०९ ।।

।। । इति शान्ताः ।।

सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ ।। ३.३.८१० ।।

काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ च तृणवीरुधौ ।। ३.३.८११ ।।

अभीपुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने ।। ३.३.८१२ ।।

पक्षः सहायेऽप्युष्णीषः शिरोवेष्टकिरीटयोः ।। ३.३.८१३ ।।

शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ।। ३.३.८१४ ।।

कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।। ३.३.८१५ ।।

द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिन्द्रिये ।। ३.३.८१६ ।।

ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ।। ३.३.८१७ ।।

कर्षूर्वार्त्ता करीषाग्निः कर्षः कुल्याभिधायिनी ।। ३.३.८१८ ।।

पुम्भावे तत्क्रियायां च पौरुषं विषमप्सु च ।। ३.३.८१९ ।।

उपादानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम् ।। ३.३.८२० ।।

स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ।। ३.३.८२१ ।।

प्रेक्षा नृत्तेक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः ।। ३.३.८२२ ।।

त्विट्शोभापि त्रिषु परे न्यक्षं कात्स्न्र्यनिकृष्टयोः ।। ३.३.८२३ ।।

प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ।। ३.३.८२४ ।।

व्याजसंख्याशरव्येषु लक्षं घोषौ रवव्रजौ ।। ३.३.८२५ ।।

कपिशीर्षं भित्तिशृङ्गेऽनुतर्षश्चषकः सुरा ।। ३.३.८२६ ।।

दोषो वातादिके दोषा रात्रौ दक्षोऽपि कुक्कुटे ।। ३.३.८२७ ।।

शुण्डाग्रभागे गण्डूषो द्वयोश्च मुखपूरणे ।। ३.३.८२८ ।।

।। । इति षान्ताः ।।

रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू ।। ३.३.८२९ ।।

वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः ।। ३.३.८३० ।।

शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।। ३.३.८३१ ।।

पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे ।। ३.३.८३२ ।।

देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।। ३.३.८३३ ।।

विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ।। ३.३.८३४ ।।

लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च ।। ३.३.८३५ ।।

प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते ।। ३.३.८३६ ।।

ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु ।। ३.३.८३७ ।।

पापापराधयोरागः खगबाल्यादिनोर्वयः ।। ३.३.८३८ ।।

तेजः पुरीषयोर्वर्चो महश्चोत्सवतेजसोः ।। ३.३.८३९ ।।

रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः ।। ३.३.८४० ।।

छन्दः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च ।। ३.३.८४१ ।।

सहो बलं सहा मार्गो नभः खं श्रावणो नभाः ।। ३.३.८४२ ।।

ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽंबु च ।। ३.३.८४३ ।।

ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये ।। ३.३.८४४ ।।

तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु ।। ३.३.८४५ ।।

विद्वान्विदंश्च बीभत्सो हिंस्रोऽप्यतिशयेत्वमी ।। ३.३.८४६ ।।

वृद्धप्रशंसयोर्ज्यायान्कनीयांस्तु युवाल्पयोः ।। ३.३.८४७ ।।

वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः ।। ३.३.८४८ ।।

।। । इति सान्ताः ।।

दलेऽपि बर्हं निर्बन्धोपरागार्कादयो ग्रहाः ।। ३.३.८४९ ।।

द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ।। ३.३.८५० ।।

तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ।। ३.३.८५१ ।।

पत्नीपरिजनादानमूलशापाः परिग्रहाः ।। ३.३.८५२ ।।

दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः ।। ३.३.८५३ ।।

व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्द्वर्कास्तमोपहाः ।। ३.३.८५४ ।।

परिच्छदे नृपार्हेऽर्थे परिबर्होऽव्ययाः परे ।। ३.३.८५५ ।।

।। । इति हान्ताः ।।

।। **नानार्थाव्ययवर्गः** ।।

आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।। ३.४.८५६ ।।

आप्रगृह्यस्स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः ।। ३.४.८५७ ।।

पापकुत्सेषदर्थे कु धिङ्निर्भर्त्सननिन्दयोः ।। ३.४.८५८ ।।

चान्वाचयसमाहारेतरेतरसमुच्चये ।। ३.४.८५९ ।।

स्वस्त्याशीः क्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति ।। ३.४.८६० ।।

स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे ।। ३.४.८६१ ।।

सकृत्सहैकवारे चाप्याराद्दूरसमीपयोः ।। ३.४.८६२ ।।

प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ।। ३.४.८६३ ।।

पुनस्सहार्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ।। ३.४.८६४ ।।

खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।। ३.४.८६५ ।।

हन्त हर्षेनुकम्पायां वाक्यारम्भविषादयोः ।। ३.४.८६६ ।।

प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।। ३.४.८६७ ।।

इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ।। ३.४.८६८ ।।

प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ।। ३.४.८६९ ।।

यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।। ३.४.८७० ।।

मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ ।। ३.४.८७१ ।।

वृथा निरर्थकाविध्योर्नानानेकोभयार्थयोः ।। ३.४.८७२ ।।

नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ।। ३.४.८७३ ।।

प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ।। ३.४.८७४ ।।

गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।। ३.४.८७५ ।।

उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ।। ३.४.८७६ ।।

अमा सह समीपे च कं वारिणि च मूर्धनि ।। ३.४.८७७ ।।

इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ।। ३.४.८७८ ।।

तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ।। ३.४.८७९ ।।

नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ।। ३.४.८८० ।।

अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।। ३.४.८८१ ।।

हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ।। ३.४.८८२ ।।

पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ।। ३.४.८८३ ।।

स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ।। ३.४.८८४ ।।

ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ।। ३.४.८८५ ।।

स्वर्गे परे च लोके स्ववार्तासंभाव्ययोः किल ।। ३.४.८८६ ।।

निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ।। ३.४.८८७ ।।

समीपोभयतश्शीघ्रसाकल्याभिमुखेऽभितः ।। ३.४.८८८ ।।

नामप्राकाश्ययोः प्रदुर्मिथोऽन्योन्यं रहस्यपि ।। ३.४.८८९ ।।

तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु ।। ३.४.८९० ।।

अहहेत्यद्भुते खेदे हि हेतावववधारणे ।। ३.४.८९१ ।।

।। । इति नानार्थवर्गः ३, अत्र मूलश्लोकाः २५६ । । ।।

।। क्षे.श्लो. २४ । । ।।

।। **अव्ययवर्गः** । ।।

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।। ३.५.८९२ ।।

मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ।। ३.५.८९३ ।।

स्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते ।। ३.५.८९४ ।।

बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ।। ३.५.८९५ ।।

पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने ।। ३.५.८९६ ।।

यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ।। ३.५.८९७ ।।

कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ।। ३.५.८९८ ।।

आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ।। ३.५.८९९ ।।

आहो उताहो किमुत विकल्पे किं किमूत च ।। ३.५.९०० ।।

तु हि च स्म ह वै पादपूरणे पूजने स्वति ।। ३.५.९०१ ।।

दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति ।। ३.५.९०२ ।।

तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ।। ३.५.९०३ ।।

स्युः प्याट्पाडङ्ग हे है भोः समया निकषा हिरुक् ।। ३.५.९०४ ।।

अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ।। ३.५.९०५ ।।

स्वाहा देवहविर्दाने श्रौषट्वौषट्वषट्स्वधा ।। ३.५.९०६ ।।

किञ्चिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ।। ३.५.९०७ ।।

व वा यथा तथेवैवं साम्येऽहो हीति विस्मये ।। ३.५.९०८ ।।

मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ।। ३.५.९०९ ।।

दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा ।। ३.५.९१० ।।

अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ।। ३.५.९११ ।।

युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते ।। ३.५.९१२ ।।

अभावे नह्य नो नापि मा स्म मालं च वारणे ।। ३.५.९१३ ।।

पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् ।। ३.५.९१४ ।।

प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ।। ३.५.९१५ ।।

समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।। ३.५.९१६ ।।

अकामानुमतौ काममसूयोपगमेस्तु च ।। ३.५.९१७ ।।

ननु च स्याद्विरोधोक्तौ कश्चित्कामप्रवेदने ।। ३.५.९१८ ।।

निष्षमं दुष्षमं गर्ह्ये यथास्वं तु यथायथम् ।। ३.५.९१९ ।।

मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ।। ३.५.९२० ।।

स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ।। ३.५.९२१ ।।

प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ।। ३.५.९२२ ।।

संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ।। ३.५.९२३ ।।

अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ।। ३.५.९२४ ।।

सना नित्ये बहिर्बाहये स्मातीतेऽस्तमदर्शने ।। ३.५.९२५ ।।

अस्ति सत्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि ।। ३.५.९२६ ।।

हुं तर्के स्यादुषा रात्रेरवसानेनमो नतौ ।। ३.५.९२७ ।।

पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने ।। ३.५.९२८ ।।

सायं साये प्रगे प्रातः प्रभाते निकषान्तिके ।। ३.५.९२९ ।।

अमानुगुण्ये स्मरणे हुं फड्विघ्ननिराकृतौ ।। ३.५.९३० ।।

अङ्गीकृतौ स्यादर्थे हूं हीनसंबोधते त्वरे ।। ३.५.९३१ ।।

परुत्परार्थैषमोऽब्दे पूर्वे पूर्वतरे यति ।। ३.५.९३२ ।।

अद्यऽत्राहन्यथ पूर्वेऽहनीत्यादौ पूर्वोत्तरापरात् ।। ३.५.९३३ ।।

तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।। ३.५.९३४ ।।

उभयद्युश्चोभयेद्युः परेत्वह्नि परेद्यवि ।। ३.५.९३५ ।।

हयो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि ।। ३.५.९३६ ।।

तदा तदानीं युगपदेकदा सर्वदा सदा ।। ३.५.९३७ ।।

एतर्हि संप्रतीऽदानीमधुना साम्प्रतं तथा ।। ३.५.९३८ ।।

दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ।। ३.५.९३९ ।।

।। % इत्यव्ययवर्गः ४, अत्र मूलश्लोकाः २३ ।।

।। लिङ्गादिसंग्रहवर्गः । ।।

।। । **अथ लिङ्गादिसंग्रहवर्गः** ५ ।।

सलिङ्गशास्त्रैः सन्नादि कृत्तद्धित समासजैः ।। ३.६.९४० ।।

अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ।। ३.६.९४१ ।।

लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।। ३.६.९४२ ।।

स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनाम च ।। ३.६.९४३ ।।

नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम् ।। ३.६.९४४ ।।

अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ।। ३.६.९४५ ।।

तल्वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् ।। ३.६.९४६ ।।

स्त्रीभावादावनि क्तिण् ण्वुल्णच्ण्वुच्क्यब्युजिञ्ङ्नि शाः ।। ३.६.९४७ ।।

उणादिषु निरूरीश्च ङ्याषूङन्तं चलं स्थिरम् ।। ३.६.९४८ ।।

तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा ण दिक् ।। ३.६.९४९ ।।

घञो ञः सा क्रियास्यां चेद्दाण्डपाता हि फाल्गुनी ।। ३.६.९५० ।।

श्यैनम्पाता च मृगया तैलम्पाता स्वधेति दिक् ।। ३.६.९५१ ।।

स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ।। ३.६.९५२ ।।

लङ्का शेफालिका टीका धातकीपञ्चिकाढकी ।। ३.६.९५३ ।।

सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका ।। ३.६.९५४ ।।

तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ।। ३.६.९५५ ।।

पिच्छा वितण्डा काकिण्यश्चूर्णिः शाणी द्रुणी दरत् ।। ३.६.९५६ ।।

सातिः कन्था तथासन्दी नाभी राजसभापि च ।। ३.६.९५७ ।।

झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।। ३.६.९५८ ।।

लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ।। ३.६.९५९ ।।

।। । इति स्त्रीलिङ्ग संग्रहः ।।

पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।। ३.६.९६० ।।

स्वर्गयागाद्रिमेघाब्धि द्रु कालासिशरारयः ।। ३.६.९६१ ।।

करगण्डोष्ठदोर्दन्तकन्ठकेशनखस्तनाः ।। ३.६.९६२ ।।

अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ।। ३.६.९६३ ।।

श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।। ३.६.९६४ ।।

कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ।। ३.६.९६५ ।।

कषणभमरोपान्ता यद्यदन्ता अमी अथ ।। ३.६.९६६ ।।

पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ।। ३.६.९६७ ।।

नाम्न्यकर्तरि भावे च घञ् जब्नङ्ण घाथुचः ।। ३.६.९६८ ।।

ल्युः कर्तरीमनिच्भावे को घोः किः प्रादितोन्यतः ।। ३.६.९६९ ।।

द्वन्द्वेऽश्ववडवावश्ववडवा न समाहृते ।। ३.६.९७० ।।

कान्तः सूर्येन्दुपर्यायपूर्वोऽयः पूर्वको.पि च ।। ३.६.९७१ ।।

वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।। ३.६.९७२ ।।

पुङ्खो न्यूङ्खः समुद्रश्च विटपट्टधटाः खटाः ।। ३.६.९७३ ।।

कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ।। ३.६.९७४ ।।

गड्डः करण्डो लगुडो करण्डश्च किणो घुणः ।। ३.६.९७५ ।।

दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ।। ३.६.९७६ ।।

कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयूपकौ ।। ३.६.९७७ ।।

आतपः क्षत्रिये नाभिः कुणपक्षुरकेदराः ।। ३.६.९७८ ।।

पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ।। ३.६.९७९ ।।

वेतालभल्लमल्लाश्च पुराडाशोऽपि पट्टिशः ।। ३.६.९८० ।।

कुल्माषो रभसश्चैव सकटाहः पतद्रहः ।। ३.६.९८१ ।।

।।। इति पुंलिङ्गशेषसंग्रहः ।।

द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ।। ३.६.९८२ ।।

शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ।। ३.६.९८३ ।।

फलहेमशुल्बलोहसुखदुह्खशुभाशुभम् ।। ३.६.९८४ ।।

जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ।। ३.६.९८५ ।।

कोट्याः शतादिसंख्यान्या वा लक्षा नियुतं च तत् ।। ३.६.९८६ ।।

द्वयष्कमसिसुसन्नन्तं यदनान्तमकर्तरि ।। ३.६.९८७ ।।

त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ।। ३.६.९८८ ।।

पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ।। ३.६.९८९ ।।

द्वन्द्वैक्त्वाव्ययीभावौ पथः संख्याव्ययात्परः ।। ३.६.९९० ।।

शङ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ।। ३.६.९९१ ।।

शालार्थापि परा राजामनुष्यार्थादराजकात् ।। ३.६.९९२ ।।

दासीसभं नृपसभं रक्षस्सभमिमा दिशः ।। ३.६.९९३ ।।

उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।। ३.६.९९४ ।।

कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ।। ३.६.९९५ ।।

भावे न णकचिद्भ्योऽन्ये समूहे भावकर्मणोः ।। ३.६.९९६ ।।

अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ।। ३.६.९९७ ।।

क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।। ३.६.९९८ ।।

चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ।। ३.६.९९९ ।।

राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।। ३.६.१००० ।।

माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम् ।। ३.६.१००१ ।।

लोकायतं हरितालं विदलस्थालबाह्लिकम् ।। ३.६.१००२ ।।

।। । इति नपुंसकशेषसंग्रहः ।।

पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ।। ३.६.१००३ ।।

मोदकस्तण्डकष्टङ्कः शाटकः कर्पटोऽर्बुदः ।। ३.६.१००४ ।।

पातकोद्योगचरकतमालामलका नडः ।। ३.६.१००५ ।।

कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ।। ३.६.१००६ ।।

संगमं शतमानार्मशम्बलाव्ययताण्डवम् ।। ३.६.१००७ ।।

कवियं कन्दकार्पासं पारावारं युगन्धरम् ।। ३.६.१००८ ।।

यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ।। ३.६.१००९ ।।

अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।। ३.६.१०१० ।।

तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ।। ३.६.१०११ ।।

।। । इति पुन्नपुंसकशेषसंग्रहः ।।

स्त्रीपुंसयोरपत्यान्ता द्विचतुष्षट्पदोरगाः ।। ३.६.१०१२ ।।

जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ।। ३.६.१०१३ ।।

ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ।। ३.६.१०१४ ।।

मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ।। ३.६.१०१५ ।।

।। । इति स्त्रीपुंसशेषसंग्रहः ।।

स्त्रीनपुंसकयोर्भावक्रिययोः व्यञ् क्वचिच्च वुञ् ।। ३.६.१०१६ ।।

औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ।। ३.६.१०१७ ।।

षष्ठ्यन्तप्राक्पदाः सेनाछायाशालासुरानिशाः ।। ३.६.१०१८ ।।

स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ।। ३.६.१०१९ ।।

आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ।। ३.६.१०२० ।।

त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ।। ३.६.१०२१ ।।

।। । इति स्त्रीनपुंसकशेषसंग्रहः ।।

त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ।। ३.६.१०२२ ।।

।। इति त्रिलिङ्गशेषसंग्रहः ।।

परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ।। ३.६.१०२३ ।।

अर्थान्ताः प्राद्यलम्प्राप्तापन्नपूर्वाः परोपगाः ।। ३.६.१०२४ ।।

तद्धितार्थो द्विगुः संख्यासर्वनामतदन्तकाः ।। ३.६.१०२५ ।।

बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ।। ३.६.१०२६ ।।

गुणद्रव्यक्रियायोगोपाधयः परगामिनः ।। ३.६.१०२७ ।।

कृतहृकर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।। ३.६.१०२८ ।।

अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ।। ३.६.१०२९ ।।

षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङ्व्ययम् ।। ३.६.१०३० ।।

परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ।। ३.६.१०३१ ।।

।। इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।।

।। सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ।।